कुटिलेत्यादिना परकीर्तिता वामनादिपुराणेषु दरीदृश्यते। सैव विष्णुपादोदका-भिमानितादशायां गङ्गा विष्णुपदीत्यादिनामवतीति सुधियो जानन्त्येव। ततश्च शिवस्य विष्णुपदीधरत्वं सर्वशास्त्रसम्मतं नानुपपन्नम्। ततश्च गङ्गाधरत्वलिङ्गं शिवस्य विष्ण्ववरत्वख्यापकमेव। तदसहमानो मा. मञ्जरीकारः गङ्गाद्वैविध्यं प्रकल्प्य स्वाज्ञानं अन्यथाज्ञानं च प्रकटीचकार। इति॥

एवं निर्दोषगुणपूर्णेन स्वतन्त्रेण श्रीहरिणा कल्पान्ते क्रियमाणे सर्वजगत्संहरणकार्ये तमोगुणाभिमानित्वेन शिवोऽपि परम्परया तदङ्गभूत इति विष्ण्वपेक्षया शिवस्य न्यूनत्वं बोध्यम्॥

जगज्जन्माद्यष्टकर्तृत्वं श्रीहरेरेव प्रत्येकं स्वरूपलक्षणमिति पूर्वं निर्णीतम्। श्रीविष्णुभक्तस्य श्रीमुख्यप्राणप्रमुखशिष्यस्य शिवस्य स्वरूपतः सुदृढश्रीहरि-गुरुभक्त्यादिगुणात्मकसात्विकस्वरूपत्वेऽपि तमोगुणाभिमानित्वेन तथा कचित्तमःप्रकृतिसम्बन्धनिमित्तकिञ्चिद्विकारेण श्रीहरिवायुविरुद्धकार्यकरणेन च तामसत्वव्यवहारो द्रष्टव्यः। शिवस्य दोषवत्वे च श्रुतयः पूर्वमुदाहृताः। निरतिशयपरमदयालुतायाः भगवद्धर्मत्वेऽपि सावधिकदयालुतादिगुणः शिवेऽपि शास्त्रसिद्धः।

एतदतिरिक्तं यदुक्तं मा. मञ्जरीकारेण ''व्रणार्थस्य दुःखकरव्रणच्छेदाय वैद्यकृतशस्त्रग्रहणदृष्टान्तेन सकलजगत्सञ्जिहीर्षुरुद्रकृतनयनाग्निग्रहणमपि रुद्रस्य परमदयालुताज्ञापकं'' मित्यादिभागेन शिवस्य मुख्यसंहारकत्वं, ब्रह्मणः शिव-दक्षिणाङ्गजातत्वं, विष्णोर्वामाङ्गजातत्वं, शिवस्य च परशिवाङ्गजातत्वं, विष्णोस्सात्विकत्वं, तामसत्वं च शिवस्य, तत्र शिवपुराणसूतसंहितादेः प्रमाणत्वमित्यादि, तत्सर्वं पूर्वोक्तश्रुतिस्मृतिविरुद्धत्वाद्व्यामोहकग्रन्थप्रणीतत्वाच्च सर्वथा त्याज्यमेव।

विष्ण्वतिरिक्तस्य परशिवस्य सद्भावे प्रमाणाभावात्परशिवादिकल्पनं

चायुक्तम्। अत्रोदाहृता चाथर्वशिखा "कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नश्शिव एको ध्येयः शिवङ्करसर्वमन्यत्परित्यज्य" इत्यादिरूपाः पूर्वोक्तरीत्या "नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति" इत्यादिश्रुत्या "वेदैश्च सर्वैरहमेव वेद्य" इत्यादि श्रीकृष्णवचनेन, ब्रह्मसूत्रप्रदर्शितयुक्तिभिश्च विष्णुपरैव ॥ तदतिरिक्त-शिवकल्पने तु "नारायण एक एवासीन्न ब्रह्मा न च शङ्कर" इत्यादिश्रुतिव्याकोपः प्रदर्शितः। न च विष्णुसम्प्रसूतिहेतुत्वस्यात्र शिवे प्रतिपादनादयं परशिवः विष्ण्वन्य एव भवेत्। स्वस्य स्वोत्पत्तिहेतुत्वायोगात् इति वाच्यम्। "अजायमानो बहुधा विजायतेति" श्रुत्या श्रीहरेरेव बहुरूपाविष्करणरूप जायमानत्वस्योक्तत्वात् विष्णुरूपप्रसूतिहेतुत्वसम्भवात् "ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः" इत्यादिप्रमाणेनानन्तरूपात्मकस्सन् स्वेतरस्मिन् ब्रह्मरुद्रादिजगति प्रविष्टः सकल-कार्यमुख्यकर्ता श्रीहरिः समुपवर्णित इति विष्णुरूपाविर्भावात्मकसम्प्रसूतिहेतुत्वं स्वस्यैव विष्णोर्नानुपपन्नम्। तथा च श्रीविष्णुभिन्नः परशिवः नास्त्येवेति नोक्तश्रुतिविरोधः। अत्रोदाहृतशिवपुराणादिविरोधश्चाऽकिञ्चित्करः। तादृशशिव-पुराणादीनां श्रुति वैष्णवस्मृतिविरोधेनापहस्तितप्रामाण्यकत्वात्। एतन्मध्योदाहृत-भागवतादीनां च पूर्वोत्तरगतश्रुत्यानुगुण्येनान्तर्यामिविष्णुरूपवर्णनपरतया योजयितुं शक्यत्वाच्च न तैर्विष्णुभिन्नपरशिवसिद्धिः। एतेन "स्थित्यादये हरिविरिञ्चिहरेति संज्ञा" इत्यादि भागवतादि-प्रामाणानुरोधेन गुणविशेषोपाधिकब्रह्मविष्णुरुद्रभेदरहितं तत्समष्टिरूपं परशिवात्मकं वस्त्वस्तीति कल्पितं चापास्तं वेदितव्यम्। तत्र पूर्वोक्तरीत्या ब्रह्मरुद्रान्तर्यामि-भगवद्रूपभूत-ब्रह्मरुद्राद्यभिन्नं परशिवाख्यं च वस्तु विष्णुरेवेत्यर्थस्वीकारे नानिष्टमस्माकम्। विष्णुभिन्नजीवात्मकब्रह्मरुद्रात्मक परशिववस्तुकल्पनं च श्रुतिस्मृतिविरुद्धत्वादग्राह्यमेव ॥

ननु जीवभूतब्रह्मरुद्राद्यङ्गीकार एव मास्त्विति चेन्न पारतन्त्र्यादिदोषग्रस्त-ब्रह्मरुद्रादिवर्णनपरश्रुतिस्मृतिपर्यालोचनयाऽप्राकृतचिदानन्दाद्यात्मक श्रीमहाविष्णु-भिन्नानां अवश्यमङ्गीकार्यत्वात्। अन्यथा

''नाहं न च शिवोऽन्ये च तच्छक्त्येकांशभागिनः।
बालक्रीडनकैर्यद्वत्क्रीडते पुरुषोत्तमः॥''

''पादोऽस्य विश्वा भूतानि त्रिपादस्याऽमृतं दिवि''॥ इत्यादि श्रुतिस्मृतिविरोधोऽपरिहार्यः स्यात्।

अत एव ''अहं ब्रह्मा च रुद्रश्च जगतः कारणं परमिति'' भागवतं, ''यो वै विष्णुः स वै रुद्रो यो रुद्रः स पितामहः एकमूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः'' इति हरिवंशवचनं एवमन्यान्यपि सात्विकपुराणवचनानि ब्रह्मविष्णुमहेश्वराख्यान्तर्यामि-भगवद्रूपपराणीति नानुपपत्तिगन्धः। ''ब्रह्मा नारायणः'' ''शिवश्च नारायणः'', ''शक्रश्च नारायणः'' ''नारायण एवेदं सर्वं''मित्यादयः श्रुतयोऽप्यन्तर्यामि-भगवद्रूपाभेदार्थैर्हि अनुकूलिता भवन्ति। तत्र श्रुतिषूपक्रमादितात्पर्यानुगुण्ये-णान्तर्यामिपरत्वस्यैवेष्यमाणत्वात्।

यानि श्रीविष्णुभक्तान् शिवादीनधिकृत्य ब्रह्मविष्णुमहेश्वरैक्यबोधनाय प्रवृत्तानि शैवादितामसपुराणवचनानि, तान्युक्तश्रुतिस्मृतिप्रमाणविरुद्धत्वात् तामसदुर्जीवव्यामोहकत्वाच्चाप्रमाणानीति मन्तव्यम्। तथा च परममङ्गल-श्रीविष्णुभिन्नं परशिवाख्यं वस्त्वप्रामाणिकमेवेति सिद्धम्। समस्तजगत्कारणस्य हरेः सृष्टिस्थितिलयादिव्यापारेष्वङ्गभावमासाद्य भगवदनुग्रहं सम्पाद्य मोक्षादिपुरुषार्थ-भागिनः पार्वतीपतेः शिवस्य श्रीविष्णोः सकाशादवरत्वमेव चिन्तनीयमिति सिद्धान्तः।

स्वरूपतोऽत्यन्तभिन्नेषु श्रीहरिहरहिरण्यगर्भेषु क्वचिदैक्यबोधकानि प्रमाणग्रन्थस्थानि यानि वाक्यान्युपलभ्यन्ते तानि स्वतन्त्रसर्वोत्तमनिर्दोष-श्रीहरीच्छानुसारेण तन्मतिमनुसृत्य हरहिरण्यगर्भयोः स्वस्वव्यापारेषु प्रवृत्तत्वान्मत्यैक्यपराण्येव न तु स्वरूपैक्यपराणि। तथात्वे तेषु स्वरूपभेदबोधकपूर्वोदाहृतश्रुतिस्मृतिविरोधप्रसङ्गात्।

तथा यदत्रोक्तं। तेषु भेदवादिनां नरकादिप्राप्तिर्दृश्यते इति तथा ''यातुधानाः पिशाचाश्च भवन्ति भेदवादिनः'' इत्यादीनि निन्दनबोधकानि नानाविधपुराण-वाक्यानि प्रदर्श्य, ''एतेन शिवान्नारायणोऽधिक'' इति केषाश्चिदुक्तिः परास्ता। ''अभेदस्य व्यक्तत्वेन न्यूनाधिकभावनाया अयुक्तत्वात्'' इति च यदुक्तं तदनेन अपाकृतं वेदितव्यम्। श्रीहरिमतिमवलम्ब्य कार्यकर्तुः शिवस्य मतिभेदं ये कल्पयन्ति तेषां निन्दनानर्थफलपरत्वात् प्रमाणवाक्यानाम्। अप्रमाणवाक्यानां च मोहकत्वादिव्यवस्थाया उक्तत्वात्।

तत्राप्यस्ति विशेषः। ब्रह्ममुख्यप्राणसरस्वतीभारतीनां सर्वदा स्वतन्त्रश्रीहरिमत्यधीनतन्मत्यनुगुणस्वमतिपूर्वककार्यकर्तृत्वं अप्रतिहतं मूलेऽवतारेषु सर्वत्र वर्तत इति तेषां भगवत्कार्ये प्रधानाङ्गत्वम्। गरुडशेषरुद्रादीनां च बाहुल्येन श्रीहरिमत्यनुसारेणैव स्वस्वकार्यकर्तृत्वसद्भावेऽपि कचित्कचिन्मूले चावतारेषु विभिन्नमतित्वं कल्याद्यसुरपराहतिवशात्सम्भवातीत्यप्रधानाङ्गत्वं तेषां इति। तस्मात् श्रीमन्नारायणस्य ब्रह्मरुद्रादिभ्यः सर्वदा सर्वत्राधिक्ये न काप्यनुपपत्तिः। श्रीहरेः सर्वोत्कर्षे शिवाद्यैक्याभावे हरीतरेषामपकर्षादौ प्रमाणानि पूर्वं प्रोक्तानि तथा वक्ष्यमाणानीमानि च :-

सत्यं सत्यं पुनः सत्यं शपथैश्चापि कोटिभिः।
विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा॥

पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा।
नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः॥
इति नारादीये।

तथा महाभारते :-

नास्ति नारायणसमं न भूतं न भविष्यति।
एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम्॥

यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः ॥

मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ॥

न त्वत्समोस्त्यभ्यधिकः कुतोन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव॥ इति ॥

तथा शिवप्रतिपादके स्कान्दे च :-

यदन्तरं व्याघ्रहरीन्द्रयोर्वने यदन्तरं मेरुगिरीन्द्रविन्ध्ययो ।
यदन्तरं सूर्यसुरेड्यबिम्बयोः तदन्तरं रुद्रमहेन्द्रयोरपि ॥

यदन्तरं सिंहगजेन्द्रयोर्वने यदन्तरं सूर्यशशाङ्कयोर्दिवि ।
यदन्तरं जाह्नविसूर्यकन्ययोस्तदन्तरं ब्रह्मगिरीशयोरपि ॥

यदन्तरं प्रलयजवारिविप्रुषोर्यदन्तरं स्तम्भहिरण्यगर्भयोः ।
स्फुलिङ्गसंवर्तकयोर्यदन्तरं तदन्तरं विष्णुहिरण्यगर्भयोः ॥

अनन्तत्वान्महाविष्णोर्तदन्तरमनन्तकम् ।
माहात्म्यसूचनार्थाय ह्युदाहरणमीरितम् ॥ इति ॥

तत्समो ह्यधिको वापि नास्ति कश्चित्कदाचन ।
एतेन सत्यवाक्येन तमेव प्रविशाम्यहम् ॥

ब्राह्मे च :-

नाहं न च शिवोऽन्ये च तच्छक्त्येकांशभागिनः ।
बालःक्रीडनकैर्यद्वत् क्रीडतेऽस्माभिरच्युतः ॥ इति च ॥

एतेन ''तुष्यतु दुर्जनन्यायमवलम्ब्यापि'' नारायणस्याधिक्यं वदितुं न शक्यत इति प्रतिज्ञापूर्वं, ''खद्योतो यदि चण्डभानुसदृशस्तुल्यो हरिः शम्भुना'' इत्यादीनि स्कान्दबोधायनवचनान्युदाहृत्य विष्णोः शिवसाम्यस्यैव निषेधे

आधिक्यनिषेधस्य कैमुत्यसिद्धत्वात् इति यदुक्तं मा. मञ्जरीकारेण तत्सर्वं निराकृतं वेदितव्यम्। शिवाधिक्यपरे स्कान्दे एव पूर्वोक्तवचने विष्ण्वाधिक्यस्य बोधितत्वात्। अतः श्रुतिसिद्धविष्ण्वाधिक्यपरस्कान्दवचनं विष्णूत्कर्षपरं सर्वं सम्मान्यम्। श्रुतिविरुद्धार्थबोधकं शैवोत्कर्षपरं पुराणादिवाक्यं त्याज्यमेव।

अत एव दुर्जनव्यामोहनाय प्रवृत्तानि पुराणवचनान्याश्रित्य अपौरुषेय वेदवाक्यस्य "एको ह वै नारायण आसीन्न ब्रह्मा न च शङ्करः" इत्यादेः "क्वचित्कल्पादौ नारायणः प्रथमं परशिवादाविर्बभूव। स च तदितरं सृष्टवान्" इत्याद्यर्थकल्पनं अप्रामाणिकं प्रमाणविरुद्धं बलाबलन्यायातिक्रमयुक्तं अत्यन्तमपहासास्पदं चेति विमर्शकाः प्रेक्षावन्तो विभावयन्तु। परशिवस्य निराकृतत्वात्। अत्र वाक्ये परशिवादिपदाध्याहारेण कृतयोजनायाश्च अश्रुतकल्पन - श्रुतपरित्यागादेः स्पष्टत्वात् च।

श्रीहरेः सर्वोत्तमत्वात् सर्वमूलत्वाच्च तस्मै सर्वं प्रथमतः समर्पणीयम्। ततश्च तदङ्गभूतेभ्यः श्रीब्रह्मरुद्रादिदेवेभ्यः यथायोग्यं समर्पणीयम्। श्रीहर्यनर्पितं च श्री ब्रह्मरुद्रादिभिः सर्वथा न स्वीक्रियते। तदुक्तं भागवते :-

यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः॥
प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या॥ इत्यादि॥

लोके दृष्टं खलु तरुमूले जलसेचनं विना शाखापत्रादिषु जलसेचनं वृक्षविनाशकारणम्। एतच्च समागताय सर्वोत्तमाय अत एव शिवादप्युत्तमाय श्रीकृष्णाय अर्जुनकृतनैशनैत्यकपूजार्थपरिकॢप्तसर्वोपहारसमर्पणप्रकरणेन स्पष्टीकृतं द्रोणपर्वणि॥

तं चोपहारं सततं नैशं नैत्यकमात्मनः।
ददर्श त्र्यम्बकाभ्याशे वासुदेवे समर्पितमिति॥

अत्र ''वासुदेवे समर्पितमि''त्यनेन श्रीकृष्णायैव सर्वसमर्पणं कार्यमिति सूचितम्। श्रीकृष्णे सन्तुष्टे तदङ्गभूतं देवजातं सन्तुष्टं भवतीति प्रमेयं त्र्यम्बकाभ्याशे उपहारदर्शनोक्त्या सूचितम्। स्वयमेवाखिलरक्षणादावमितशक्तिमानप्यच्युतः ''गुरुद्वारा प्रसादकृदिति'' शास्त्रार्थज्ञापनायैव अर्जनकृतपूजां स्वयं स्वीकृत्य प्रसन्नः सन् इन्द्रावतारस्यार्जुनस्य स्वरूपतः साक्षाद्गुरुः रुद्रः इति रुद्रगुरुमुख्यप्राणगुरोः स्वस्य अर्जुनं प्रति न साक्षाद्गुरुत्वमिति च ज्ञापनाय अञ्जसा गिरिशानुग्रहमर्जुनं स्वप्ने प्रापय्य प्रथमतः प्राप्तं पाशुपतास्त्रं स्वकारिताद्रुद्र प्रसादादुल्बणं चकारेति तत्प्रकरणार्थः॥

अत्र मा - मञ्जरीकारेण यदुक्तं ''कृष्णमूर्तौ शिवाविर्भावोऽस्तीति शिवार्चनबुध्या समर्पितं पूजाद्रव्यमर्जुनेन। न तु शिवादुप्युत्तमः श्रीकृष्णः समायत इति बुद्ध्या'' इति तत्तुच्छम्।

न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः
लोकत्रयेऽप्यप्रतिमप्रभाव॥ इत्यनेन,
पश्यामि देवान् तव देव देहे.........
ब्रह्माणमीशं कमलासनस्थं....इत्यादिना च

अर्जुनस्य श्रीकृष्णसर्वोत्तमत्वबुद्धिसद्भावस्य प्रमितत्वात्। युद्धात् पूर्वमेव गीतोपदेशेन सम्पादितकृष्णपारम्यज्ञानस्यार्जुनस्य शिवपारम्यादिबुद्धेरनवकाशात्। विश्वरूपदर्शनकाले श्रीकृष्णपादावलम्बिकमलासनपादावलम्बिनं शिवं साक्षाद्-दृष्टवतोऽर्जुनस्य कुतो मुख्यतः शिवार्चनबुद्धेरवकाशः। तस्मात् ''न शिवार्चनबुध्या इति न भ्रमितव्यमिति'' परोक्तिरेव भ्रममूला॥

अत्र यत्प्रलपितं परेण। गीतायां ''आख्याहि मे को भवानुग्ररूपः'' इत्यादिनार्जुनेन पृष्टः कृष्णः ''कालोऽस्मिलोकक्षयकृत्प्रवृद्धः''इत्यादिना स्वं सकलजगत्संहारककालाग्निरुद्रमाचख्यौ। एवमेव ''पश्य मे योगमैश्वरम्'' इत्यादिना च वैष्णवरूपस्यापि मूलभूतं शैवमेव प्रदर्शितं कृष्णेनेति ज्ञायते इत्यादि

तत्तुच्छम् ।। गीतायां प्रश्नोत्तरभागयोः प्रसक्तानां कालेश्वरैश्वर्यादिशब्दानां रुद्रवाचकत्वाभावात् । तथा हि । विश्वरूपे प्रयुक्तेनानेन कालादिशब्देन वाच्यः किं पार्वतीपतिः रुद्र इति मन्यसे ? उत त्वत्कल्पितपरशिव इति । नाद्यः । विश्वरूपैकदेशे कमलासनाधीनतया शिवस्य दर्शनात् कालादिशब्दवाच्यस्य विश्वरूपस्य शिवेतरत्वस्यैव सिद्धेः । न द्वितीयः । श्रीकृष्णातिरिक्ते परशिवपदार्थे प्रमाणाभावस्य पूर्वमुपपादितत्वात् । श्रीकृष्णस्यैव परशिवपदार्थत्वे च विश्वरूपस्य कालादिशब्दवाच्यस्य वैष्णवत्वमबाधितमिति त्वत्कुकल्पनाया अनवकाशात् । किञ्च त्वत्कल्पितस्य परशिवस्य निराकारत्वान्नीरूपत्वान्निधर्मकत्वात्साकार-सरूपसायुधाद्यात्मकविश्वरूपत्वं कथं घटेत । औपाधिकत्वविवक्षायां च वैष्णवत्वमेव सिद्धं भवति । त्वद्रीत्या श्रीकृष्णः औपाधिकपदार्थः खिल । वस्तुतस्तु औपाधिकत्वकल्पनाया एवानुपपत्तिपराहतत्वेनायुक्तत्वस्य आकरे बहुधा प्रतिपादितत्वाद् विश्वरूपस्य स्वाभाविकवैष्णवत्वं सिद्ध्यतीति परमार्थः ।।

किञ्चार्जुनं निमित्तीकृत्य समस्तसाधकलोकान् उद्धिधीर्षुः श्रीकृष्णो गीतायां वैष्णवतत्वमेवोपदिष्टवानित्येतत्तदीयसमग्रपूर्वोत्तरवाक्यावलोकनेन निर्धारितं भवति ।

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते''

''मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय'' ।।

''मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव'' ।।

''मया ततमिदं सर्वं सूत्रे मणिगणा इव'' ।।

''मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः'' ।।

''द्वावि मौपुरुषौ लोके क्षरश्चाक्षर एव च ।

क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।

यो लोकत्रयमाविष्य बिभर्त्यव्यय ईश्वरः ।।

यस्मात्क्षरमतीतोऽहं अक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥
यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्।
स सर्ववित् भजति मां सर्वभावेन भारत॥''

इत्यादिभिः सर्वस्माज्जगतो भगवतो भेदः श्रीकृष्णस्य सर्वोत्तमत्वं सर्वस्य जगतस्तदधीनत्वं श्रीकृष्णस्यानन्याधीनत्वं, निर्दोषत्वं, सर्वशास्त्राणां तत्परत्वं, तज्ज्ञानस्यैव मोक्षसाधनत्वं वर्णाश्रमधर्मगम्यत्वमित्यादयो वैष्णवधर्माः प्रतिपादिताः। तथा च तत्र तत्र प्रयुक्तेश्वरशब्दः परमैश्वर्यवाची सन् श्रीविष्णुवाचक एव। न तु भगवधीनामुख्यैश्वर्यशालिरुद्रवाचक इति बोधः पूर्वोत्तरग्रन्थपरामर्शिणां प्रेक्षावतां सुलभ एव।

एतेन तत्तत्पुराणवाक्यमवलम्ब्य गीतायाः शिवतत्वपरत्वप्रदर्शनं यत्कृतं परेण तदपि समाहितं भवति। क्वचिच्छिवादिपदानां सर्वशब्दवाच्यहरिपरत्वात्। क्वचित्तामसपुराणेषु चासुरव्यामोहकत्वस्य पूर्वं प्रतिपादितत्वात्। अन्यथा

वेदे रामायणे चैव पुराणे भारते तथा।
अदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते॥

इत्यादिरूपाणां परः शतानां पुराणेतिहासवाक्यानां विष्णुपरत्वप्रतिपादकानां का गतिः भो वादिन् ? वद। शिवोत्कर्षप्रतिपादनेच्छया प्रवृत्तस्य तव शिवविष्ण्वैक्यपरतया योजनस्य अनभिमतत्वात्। परस्परं विरोधोऽपरिहार्यः त्वत्पक्षे। अस्मत्प्रदर्शितस्य विरोधपरिहारक्रमस्यादरे च सिद्धो विष्णूत्कर्षः शिवापकर्षश्चेति।

गीतायामेव स्पष्टं :-

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामैवेष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥

तत्तुच्छम् ॥ गीतायां प्रश्नोत्तरभागयोः प्रसक्तानां कालेश्वरैश्वर्यादिशब्दानां रुद्रवाचकत्वाभावात् । तथा हि । विश्वरूपे प्रयुक्तेनानेन कालादिशब्देन वाच्यः किं पार्वतीपतिः रुद्र इति मन्यसे ? उत त्वत्कल्पितपरशिव इति । नाद्यः । विश्वरूपैकदेशे कमलासनाधीनतया शिवस्य दर्शनात् कालादिशब्दवाच्यस्य विश्वरूपस्य शिवेतरत्वस्यैव सिद्धेः । न द्वितीयः । श्रीकृष्णातिरिक्ते परशिवपदार्थे प्रमाणाभावस्य पूर्वमुपपादितत्वात् । श्रीकृष्णस्यैव परशिवपदार्थत्वे च विश्वरूपस्य कालादिशब्दवाच्यस्य वैष्णवत्वमबाधितमिति त्वत्कुकल्पनाया अनवकाशात् । किञ्च त्वत्कल्पितस्य परशिवस्य निराकारत्वान्नीरूपत्वान्निधर्मकत्वात्साकार-सरूपसायुधाद्यात्मकविश्वरूपत्वं कथं घटेत । औपाधिकत्वविवक्षायां च वैष्णवत्वमेव सिद्धं भवति । त्वद्रीत्या श्रीकृष्णः औपाधिकपदार्थः खिल । वस्तुतस्तु औपाधिकत्वकल्पनाया एवानुपपत्तिपराहतत्वेनायुक्तत्वस्य आकरे बहुधा प्रतिपादितत्वाद् विश्वरूपस्य स्वाभाविकवैष्णवत्वं सिद्ध्यतीति परमार्थः ॥

किञ्चार्जुनं निमित्तीकृत्य समस्तसाधकलोकान् उद्धिधीर्षुः श्रीकृष्णो गीतायां वैष्णवतत्वमेवोपदिष्टवानित्येतत्तदीयसमग्रपूर्वोत्तरवाक्यावलोकनेन निर्धारितं भवति ।

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते''

''मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय'' ॥

''मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव'' ॥

''मया ततमिदं सर्वं सूत्रे मणिगणा इव'' ॥

''मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः'' ॥

''द्वावि मौपुरुषौ लोके क्षरश्चाक्षर एव च ।

क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।

यो लोकत्रयमाविष्य बिभर्त्यव्यय ईश्वरः ॥

यस्मात्क्षरमतीतोऽहं अक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥
यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्।
स सर्ववित् भजति मां सर्वभावेन भारत॥''

इत्यादिभिः सर्वस्माज्जगतो भगवतो भेदः श्रीकृष्णस्य सर्वोत्तमत्वं सर्वस्य जगतस्तदधीनत्वं श्रीकृष्णस्यानन्याधीनत्वं, निर्दोषत्वं, सर्वशास्त्राणां तत्परत्वं, तज्ज्ञानस्यैव मोक्षसाधनत्वं वर्णाश्रमधर्मगम्यत्वमित्यादयो वैष्णवधर्माः प्रतिपादिताः। तथा च तत्र तत्र प्रयुक्तेश्वरशब्दः परमैश्वर्यवाची सन् श्रीविष्णुवाचक एव। न तु भगवधीनामुख्यैश्वर्यशालिरुद्रवाचक इति बोधः पूर्वोत्तरग्रन्थपरामर्शिणां प्रेक्षावतां सुलभ एव।

एतेन तत्तत्पुराणवाक्यमवलम्ब्य गीतायाः शिवतत्वपरत्वप्रदर्शनं यत्कृतं परेण तदपि समाहितं भवति। क्वचिच्छिवादिपदानां सर्वशब्दवाच्यहरिपरत्वात्। क्वचित्तामसपुराणेषु चासुरव्यामोहकत्वस्य पूर्वं प्रतिपादितत्वात्। अन्यथा

वेदे रामायणे चैव पुराणे भारते तथा।
अदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते॥

इत्यादिरूपाणां परः शतानां पुराणेतिहासवाक्यानां विष्णुपरत्वप्रतिपादकानां का गतिः भो वादिन् ? वद। शिवोत्कर्षप्रतिपादनेच्छया प्रवृत्तस्य तव शिवविष्ण्वैक्यपरतया योजनस्य अनभिमतत्वात्। परस्परं विरोधोऽपरिहार्यः त्वत्पक्षे। अस्मत्प्रदर्शितस्य विरोधपरिहारक्रमस्यादरे च सिद्धो विष्णूत्कर्षः शिवापकर्षश्चेति।

गीतायामेव स्पष्टं :-

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामैवेष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥

इत्यादिरूपभगवद्वचनपर्यालोचनया श्रीकृष्णानुग्रहेणैव सर्वात्मना धनञ्जयो विजयी रराज इति ज्ञायते। अर्जुनश्च सर्ववैष्णवधर्मान्परित्यज्य श्रीकृष्णपूजायामेव सततमासक्त आसीन्न शिवपूजादौ मुख्यतः। ''करिष्ये वचनं तवेति'' पार्थवचनमेव तत्र सर्वत्र विषये प्रमाणम्। श्रीकृष्णापेक्षयात्ववरस्य स्वापेक्षया चोत्तमस्य शिवस्य पूजनं त्वर्जुनकृतं शिवस्य श्रीहरिपरिवारतया ग्राह्यतायाः पूर्वमुपपादितत्वादनुमतमेव वैष्णवस्य। अत एव द्रोणादिपर्वसु तत्र तत्रार्जुनस्य शिवकृतसाहाय्यवर्णनं शिवकृतशिबिरसंरक्षणवर्णनं च न कृष्णपारम्यविरोधि। श्रीकृष्णाज्ञया श्रीकृष्ण परिवारभूतेन शिवेन श्रीकृष्णभक्तार्जुनादेः सहाय्यादिकरणस्य युक्तत्वात्। श्रीकृष्णः साक्षात् तथा स्वपरिवारेण चार्जुनादेः साहाय्यमाचचारेत्यत्रैव तादृशकथानां महातात्पर्यम्। एतेन एतत्साहाय्याचरणकथामवलम्ब्यार्जुनादेरवैष्णवत्वापादनप्रयत्नः परकृतोऽपास्तो वेदितव्यः।

पञ्चेन्द्रोपाख्यानादिपर्यालोचनेन च रुद्रस्याज्ञानं, ब्रह्मदेवशापग्रस्तत्वं, अत एवाश्वत्थामरूपे स्वपत्नीवियोगेनावस्थानं पाण्डवविरोधादिना श्रीकृष्णशापनिमित्त-कदुःखाद्यनुभवः एवमादयो नैके दोषा शिवे प्रकटिता भवन्ति इति नैतत्प्रकरणं शिवस्य सर्वकार्यधूर्वहत्वे तन्त्रम्।

यदत्रोक्तं ''परशिवविभूतिलेशभूतनारायणांशसञ्जातकृष्णरूपेण प्रत्यक्ष-मेवार्जुनविजयधूर्वहत्वमाविष्कृतमितिदिक्। कृष्णस्य शिवांशत्वं ''एष योगीश्वरः शार्ङ्गी ममैवांशो न संशयः....'' इत्यादित्यपुराणादिभिरवगम्यत इति''। तत्तुच्छम्। तदभिमततुरीयशिवस्याप्रामाणिकत्वात्। प्रदर्शितपुराणवाक्यानां पूर्वं सविवेचनं निराकृतत्वात् श्रीकृष्णस्य शिवांशत्ववर्णनस्यायुक्तत्वात्। किञ्च तुरीयशिवस्य त्वन्मते निरंशत्वान्नारायणस्य तदंशत्ववर्णनमुन्मत्तप्रलापायितमेव।

उक्तपुराणवाक्यानां च ''एष मोहं सृजाम्याशु यो जनान्मोहयिष्यति। त्वं च रुद्रमहाबाहो मोहशास्त्राणि कारय'' इत्यादिप्रमाणानुसारेण व्योमहकताया व्यवस्थापितत्वात्। श्रुतिसिद्धे च श्रीकृष्णस्य सर्वोत्तमत्वे न कोऽपि विरोध इति दिक्।

''सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यं।
अवान्तरं तत्परत्वं तदन्यत्सर्वागमानां पुरुषार्थः ततोऽतः ॥''

इत्यादिश्रुतिसिद्धश्रीविष्णूत्कर्षविरुद्धार्थबोधकानां पुराणादीनामप्रामाण्यस्य तथा सर्वेषां श्रुतिवचसां विष्णूत्कर्षाविरुद्धार्थपरतायाः पूर्वं प्रदर्शितत्वात्।

यदत्र परेण ''विष्णोः शिवादुत्पत्त्यादिविषये भूयांसि प्रमाणानि सन्ति........दिङ्मात्रमुदाहराम'' इति प्रतिज्ञापूर्वं ''सोमः पवते जनिता मतीनां..........जनिताऽथ विष्णोः'' इति ऋग्वेदवाक्यं

उमया सहितो देवः सोम इत्युच्यते बुधैः।
स एव कारणं नान्यो विष्णोरपि च वै श्रुतिः ॥

इत्यादित्यपुराणवाक्यं तथा लिङ्ग - कूर्म - द्रोणपर्व - पद्मपुराण - सौरपुराणादिकं च पुनः पुनः समुदाहृतं तत्सर्वं पूर्वोदाहृतविष्णूत्कर्षतात्पर्यकश्रुतिविरुद्धत्वादपाकृतं वेदितव्यम्। सज्जीवानां बोधनमिव दुर्जीवानां बाधनमपि विष्णुकार्यमिति तदाज्ञाधरशिवेन कृतस्य असुरजनव्यामोहनव्यापारस्य ''एष मोहमि''त्यादि प्रमाणसिद्धत्वात् एतदेव पौनः पुन्येन संस्मरेत्येवं समाधानं पुराणविषये अवगन्तव्यम्। श्रुतेश्च अविरुद्धार्थः पूर्वं प्रदर्शितः।

पतञ्जलिकृतयोगशास्त्रवाक्योदाहरणं च शिवस्य सर्वविद्योपदेष्टृत्वादौ साधकांशाभावादयुक्तम्। तत्सूत्रगतेश्वरपदस्य श्रीकृष्णपरत्वात्। ''वासुदेवा-र्जुनाभ्यां वुञ्'' इति सूत्रयतः पाणिनेः मतानुसारिणः पतञ्जलेः श्रीकृष्णाधिक्यस्यैव

अभिमतत्वात्। "पुरुषविशेष ईश्वरः" इत्यत्र विष्णुरेवेश्वरशब्दार्थः इत्यपि वक्तुं शक्यत्वाच्च।

अत एवावैदिकपाशुपतमतमवलम्ब्य प्रवृत्तानां सौरादिपुराणवाक्यानां उदाहरणपूर्वकं शिवसर्वोत्तमत्वानङ्गीकारिणां वेणुपत्राकृतिपुण्ड्रधारिणां च पञ्चमहापातकित्वादिरूपेण निन्दनं यत्परकृतं तद्वैदिकप्रामाणिकमाध्वमार्गस्या-किञ्चित्करं वेदितव्यम्। विष्णुसर्वोत्तमत्वशिवाद्यपकृष्टत्वोर्ध्वपुण्ड्रधारित्वादीनां श्रुतिशास्त्रतदनुसारिपाञ्चरात्रादिप्रमाणसिद्धत्वात्। अन्यथा शैवाचारादिनिन्दक-वचनानां तिर्यक्त्रिपुण्ड्रधारणनिषेधकवचनानां, शैवादिदुर्मतावलम्बिदुर्जन-मुखनिरीक्षणे सचैलस्नानादिविधायकवचनानां च बहुलमुपलम्भात् कथं निर्णयः ? तस्माद्विष्णूत्कर्षपरपौरुषेयवचनानां वैष्णवसदाचारविचारपरवचनानां च श्रुतिमूलत्वेन सात्विकत्वाद् ग्राह्यत्वम्। अवैष्णवानां शैवादीनां च पाशुपतादिदर्शनान्तरमूलत्वेन तामसत्वादग्राह्यत्वं निन्द्यत्वं च बोध्यम्। तथा च वैष्णवाचार एव ब्रह्मरुद्रादि-देवर्षिप्रभृतिपरम्पराप्राप्तः समीचीन आचारः। नान्यः शैवाद्याचारः। तस्मात् "धर्मं पित्रादिभिः सर्वैः सेवितं न परित्यजेदि"त्यादीनि धर्मशास्त्रवाक्यान्यपि वैष्णवाचारपराण्येव। श्रीब्रह्मरुद्रादिसर्वदेवाद्युपास्यो विष्णुरेव सर्वैः साधकमुमुक्षुभिः सद्वैष्णवधर्माचरणपुरस्सरं समाश्रयणीयः। तथा समाश्रयणीयं च सर्वदा श्रीमन्मध्व-मतमिति सिद्धम्। एतत्सर्वं समालोच्य मणिमञ्जरीकारैः श्रीमन्नारायणपण्डिताचार्यैः हरेर्वेदप्रतिपाद्यत्वबोधकं गोविन्दमिति निर्देशनं प्रथमतः कृतम्।

किञ्च विष्णोः श्रीपतित्वेनाऽपि सर्वोत्तमत्वं शिवादीनामपकृष्टत्वं च सिद्ध्यति। कथं? इत्थम्। श्रीः खलु

"यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तं ऋषिं तं
सुमेधां" "अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे......"

इत्यादिषु वेदभागेषूग्रादिशब्दोदितरुद्रब्रह्मादीनां सृष्ट्यादिसामर्थ्यवत्त्वं स्वस्याः स्वयं

स्पष्टमभिदधाति। ''मम योनिरप्स्वन्तः समुद्र'' इत्यनेन समुद्रशायिनो विष्णोः स्वकारणत्वमाह। समुद्रान्तस्थत्वं च ''यमन्तः समुद्रे कवयो वयन्ति'' ''महोदधिशयोन्तकः'' इत्यादिभिः प्रमाणैर्विष्णोर्लक्षणम्। अम्भृणीसूक्तस्थमिदं वाक्यं महालक्ष्मीवाक्यमेव।

''अम्भृणी वा वागात्मानं तुष्टाव''

इत्यादिना अंभृणी, अं प्रलयजलं बिभर्ति इति अम्भृणीति व्युत्पत्या, तथा तन्त्रसारे चतुर्थाध्याये प्रदर्शितस्मृत्या च साक्षान्महालक्ष्मीरेव। स्वेच्छामात्रेण ब्रह्मरुद्रादिपदप्रदात्र्या अस्या अम्भृण्याः परशक्तिमहालक्ष्मीस्वरूपत्वं विनाऽप्रसिद्धर्षिकन्यास्वरूपत्वादिकल्पनं च न युज्यते। उक्तप्रमाणबाधात्। इत्थं चैतादृशश्रीपतित्वयुक्त्या श्रीविष्णोर्ब्रह्मरुद्राद्युत्तमत्वं सिद्धम्। तथा चायं प्रयोगः विष्णुः ब्रह्मरुद्राद्युत्तमः ब्रह्मरुद्रादिनियामकश्रीतत्व-नियामकत्वात्। यः यन्नियामकनियामकः सः तदुत्तमः यथा सम्प्रतिपन्न इति।

तथा स्पष्टं रुद्रादिदेवानां दोषसमुद्घाटनपूर्वकं श्रीहरेर्निर्दोषानन्तकल्याण-गुणपूर्णत्वं समुपपाद्य श्रीविष्णुं समुदवहन्महालक्ष्मीः इति सात्विकतमे भागवतादौ वर्णितम् :-

''स ईश्वरः किं परतोऽव्यपाश्रयः''

''एवं विमृश्याव्यभिचारिसद्गुणं रमा मुकुन्दं निरपेक्षमीप्सितं'' इत्यादिकं च तत्रैव समुपलभ्यते।

अनेन ब्रह्मरुद्राद्युपास्यमहालक्ष्म्याः पत्युः श्रीविष्णोरेव सर्वोत्तमत्व-सर्वोपास्यत्व - मुख्यवन्द्यत्वादिकं सिद्धं भवतीति श्रीमद्वैष्णवमतमेव समाश्रयणीयं जिज्ञासुभिर्मुमुक्षुभिरिति संसूचकेन ''श्रियः पतिमि''ति आद्यपद्यस्थविशेषणेन मा-मञ्जरीकारोक्तं ''एवं शिव एवोपास्यः तन्मतमेवाश्रयणीयमिति सिद्धमिति''

यत्तदपाकृतं वेदितव्यम् । प्रमाणमतिक्रम्य स्वकपोलकल्पितक्रमेण देवतावर्णनं न हि देवसन्तुष्टिनिदानम् । अन्यथोपासनयाऽनर्थफलकञ्च भवति ।

तस्मात् श्रुतिस्मृतिसद्युक्त्यादिप्रमाणानुरोधेन शिवतत्त्वे समालोडिते श्रीहरिवायुभक्तस्य पार्वतीपतेश्शिवस्य परमानुग्रहसम्पादकः संवर्णनसमुपसेवनादि-क्रमोऽस्मत्कृते माध्वस्तुतिग्रन्थे सम्प्रदर्शितः । तत्रेमौ संग्राहकौ श्लोकौ :-

**ईशोऽनो यस्य सोऽयं श्रुतिभिरभिहितः प्राणशिष्यः सतीशः**
**गुर्वाज्ञाधृत्सुरादीन् हरिवरचरितं बोधयन् शास्त्रसिद्धम् ॥**
**दुर्वाद्युन्मत्तदैत्यान् हरिगुरुविमुखान् कारयन्मोहयंश्च**
**श्री श्रीशप्रीतिपौत्रः त्रिजगति जयतात् माध्ववर्गाग्रगण्यः ॥**

तथा

**सोऽयं नः पार्वतीशो हरिगुरुपरमद्वेषयुक्तान् तमोऽन्धं**
**नेतुं दुश्शास्त्रकर्ताप्यमलमतिरलं श्रीशवाणीशभक्तः ।**
**मूले प्राक्चावतारेष्ववधृतहरिवाय्वंघ्रिराम्नायविद्याः**
**सच्छास्त्राणि प्रहृष्टः सुरमुनिसुजनान् बोधयन्राजतेऽलम् ॥** इति ॥

सति चैवं स्वव्याघातमप्यजानन् यदाह मन्दो मा-मञ्जरीकारः स्वीय-द्वितीयपद्यव्याख्यानावसरे ''कपिलकणादाद्यवेद्यं दुर्विज्ञेयं जीवब्रह्मात्मैक्यरूपा-खण्डपरमार्थं वक्तुं शिव एव शङ्कराचार्यात्मनाऽवततार । तत्र प्रमाणान्युदा-हरिष्यामः'' इत्यादि । तत्तुच्छम् । तथा हि । एतावता स्वप्रबन्धेन शिवसर्वोत्तमत्वस्य श्रुतिस्मृतिपरमार्थत्वं ब्रुवताऽनेन मन्देन झटिति जीवब्रह्माद्वैते परमार्थत्वं प्रतिजानता स्वेनैव स्वस्य शिवपारम्यवादस्य तिलाञ्जलिः प्रदत्त इति स्वव्याघातः प्रकटितः । शिवावतारः शङ्कराचार्य इत्येतदनन्वितमिति अस्मत्कृतमाध्वस्तुत्युक्तं पञ्चमपद्यं स्पष्टयति :-

**कैष श्रीशङ्करो नः श्रुतिगणगणितः शिष्टसद्वैष्णवाग्र्यः**
**कासौ दुष्टाग्रणीर्दुमतिहतकुनरैराद्दतस्सङ्करस्ते ॥ इति ॥**

मूले दूर्वासशुकाश्वत्थामाद्यवतारेषु च श्रीविष्णुसर्वोत्तमत्वाद्युप-देशकत्वमद्वैतादिसर्वदुर्मतनिरासपरत्वं च शिवस्य प्रमाणतमभारतभागवतादौ प्रसिद्धम्। तद्विरुद्धं जीवब्रह्माद्वैतं परमार्थतत्वमिति कथं वा वक्ति प्रामाणिकः शिष्टाग्रेसरः शिवः? अतोऽयमद्वैतवादी त्वदीयसङ्करो नास्मच्छङ्करः। परन्तु दुष्टाग्रणीर्मणिमन्नामकतामसदुर्जीव एव। एतत्सर्वमुत्तरत्र सप्रमाणं विवरिष्यामः। तथा त्वदुक्तप्रमाणाभासान् निराकरिष्यामः।

इदमत्रावधेयम्। दार्शनिकस्य श्रैष्ठ्यं देवत्वं च तत्तदर्शनस्य निर्दुष्टत्वमवलम्बते। दर्शनस्य दुष्टत्वं च तद्दार्शनिकस्य कनिष्टत्वं दैत्यत्वं वा व्यवस्थापयति। अत एवोक्तमभियुक्तैः "देवो वा दानवो वा स्याद्भाष्यकारो न मानव" इति। प्रकृतं च शाङ्करं जीवब्रह्मैक्यदर्शनं सर्वप्रमाणविरुद्धमप्रामाणिकं चेत्यत्यन्तदुष्टम्। तथा हि। न हि जीवब्रह्मैक्ये किञ्चिन्मानमस्ति। "स आत्मा तत्त्वमसि" इत्यादिवेदवाक्यं अतत्त्वमसीतिच्छेदयुक्तं तत्पदार्थब्रह्मत्वंपदार्थजीवयो-र्भेदबोधकमेव भवति। तदिति पदच्छेदसम्भवेऽपि भेदपर शकुनिसूत्रदृष्टान्तानुसारेण दार्ष्टान्तिके घटदृष्टान्तानुसारेण 'शब्दोनित्य' इत्यादावनित्य इति छेदस्येव अतदिति छेदस्यैव न्याय्यत्वात्। तथा च नानेनाद्वैतसिद्धिर्भवति।

अथवा "तत्वमसीति" ग्रहणेऽपि नाद्वैतसिद्धिः। वाक्यार्थज्ञानं हि वाक्यघटकपदार्थज्ञानाधीनम्। एतद्वाक्यधटकतत्पदशक्यार्थत्वंपदशक्यार्थभूतयोः सर्वज्ञत्वादिधर्मविशिष्टपरब्रह्माल्पज्ञत्वादिधर्मविशिष्टजीवचैतन्ययोः सामानाधि-करण्येनोपस्थापितोऽभेदस्तमःप्रकाशयोरभेद इव विरुद्धत्वान्नाङ्गीकारार्हः। शक्यार्थान्वयानुपपत्त्या लक्षणावृत्याश्रयणे च लघ्व्या तत्पदमात्रलक्षणया तत्सदृशतदधीनत्वाद्यर्थग्रहणसम्भवेन, तत्पदशक्यार्थत्वंपदशक्यार्थाऽपरित्यागपूर्वकं

सामानाधिकरण्यमात्रस्य ''सिंहो देवदत्त'' इत्यादाविवामुख्यार्थग्रहणसंम्भवेन वा सर्वज्ञत्वादिविशिष्टब्रह्मसदृशतदधीनजीवचैतन्यरूपाबाधितार्थबोधसम्भवाद् गुर्वीं जहदजहल्लक्षणावृत्तिमाश्रित्याद्वैतबोधसम्पादनक्रमं न कोऽपि शब्दवृत्तिमर्यादाभिज्ञः प्रेक्षावान् सम्मानयति ।

वस्तुतस्तु जहदजहल्लक्षणा नाम वृत्तिरेव नास्ति । ''गङ्गायां घोष'' इत्यादौ जहल्लक्षणायाः, ''शोणो धावती''त्यादावजहल्लक्षणायाः सिद्धिरिव जहदजहल्लक्षणायाः काप्यसिद्धेः । ''सोऽयं देवदत्तः'' इत्यादावपि तत्पदमात्रस्य तद्देशकालोपलक्षितार्थे लक्षणास्वीकारेण तद्देशकालोपलक्षितदेवदत्ताभिन्नैतादृशकालविशिष्टदेवदत्तरूपाबाधितार्थबोधसम्भवेन तत्पदैतत्पदद्वयस्य जहदजहल्लक्षणायाः निर्मूलत्वात् । तथा च जहल्लक्षणया ''यजमानः प्रस्तर'' इत्यादिकमिव तत्वमसीतिवाक्यमपि तत्पदार्थसादृश्याद्यभिधायकं सत् जीवब्रह्मभेदे प्रमाणं भवति । नाद्वैत इति सिद्धम् । निर्दुखत्वादिना तत्पदार्थसादृश्यं च त्वं पदार्थे न पूर्वं ज्ञातमिति तद्बोधकस्य वाक्यस्य नापूर्वार्थबोधकताभङ्गः ॥

एतेन ''जहदजहल्लक्षणैवात्र भवितुमर्हति । शक्त्युपस्थापितयोर्जीवचैतन्येश्वरचैतन्ययोरभेदान्वयासम्भवेन विरुद्धयोर्जीवत्वेश्वरत्वरूपविशेषणभागयोः परित्यागेनाविरुद्धचैतन्यरूपविशेष्यभागयोरेव स्वीकार्यत्वात् । असिपदेन तत्त्वंपदसामानाधिकरण्यलभ्यमखण्डार्थरूपं जीवब्रह्मैक्यं लक्ष्यते । ततश्च विगलिताशेषविकल्पं अखण्डचैतन्यमिति वाक्यार्थः पर्यवसन्न'' इति मा. मञ्जरीकारोक्तं परास्तम् ॥

प्रधानभूतप्रकृतिमुख्यार्थौ परित्यज्य अप्रधानभूतसामानाधिकरण्यार्थपरिरक्षणस्यान्याय्यत्वात् । चिदैक्यसिद्धावपि जीवब्रह्मैक्यरूपाखण्डार्थासिद्धेश्च । जीवब्रह्मभेदस्य चिदैक्येन विरोधाभावाच्च । अशेषविकल्पाभावाख्यविशेषवत्वस्यैव सिद्ध्या चैतन्येऽखण्डार्थत्वहानेश्च ॥

अत्र विद्यारण्योक्तमिति यदुक्तं
''एकमेवाद्वितीयं सन्नामरूपविवर्जितम् ।
सृष्टेः प्रागधुनाप्यस्य तादृक्त्वं तदितीर्यते ॥
श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वं पदेरितम् ।
एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ॥'' इति ॥

तत्तुच्छम् । नामरूपाभावविशिष्टवस्तुनः तत्पदार्थत्वे देहेन्द्रियाद्यभाव-विशिष्टवस्तुनः त्वंपदार्थत्वे मानाभावात् । भागत्यागलक्षणावृत्तेर्निराकृतत्वाच्च । तत्पदार्थभूतवस्तुविशेषणसार्वज्ञाभावात् त्वंपदार्थभूतवस्तुविशेषणासार्वज्ञाभावस्य वैलक्षण्येन तादृशाभावविशिष्टयोः तत्त्वंपदार्थयोरैक्यायोगाच्च । अभावद्वयस्य उपलक्षणत्वेऽपि विरुद्धोपलक्षणधर्मज्ञापितपदार्थद्वयस्य विभिन्नत्वेन ऐक्यासिद्धेश्च । एकस्यैवोपलक्षणधर्मद्वयज्ञापितत्वे वैयर्थ्यानिस्तारः । स्वप्रकाशत्वेन स्वतः सिद्धात्मस्वरूप भूताद्वैतस्य श्रुतिबोध्यत्वायोगश्च । असिद्धार्थबोधनेनैव श्रुतेः सार्थक्यस्य न्याय्यत्वात् । ततश्च ''अत्रायं मामकः तत्वमसीति श्रुत्यर्थसंग्रह'' इति मा. मञ्जरीकारेण पठितः श्लोको एवं मदुक्तक्रमेण परिवर्त्य पठनीयः ।

तद्वाच्यो निखिलज्ञतामधिगतोऽल्पज्ञस्त्वमर्थस्तयो-
रैक्यासम्भवतो जहत्यजहती भिन्ना च नो लक्षणा ।
तेनाभेदविरुद्धधर्मसहितात् सर्वज्ञचैतन्यतः
नैक्यं जीवचितीह वक्त्यसिपदं द्वैतं महावाक्यगम् ॥ इति ॥

यदुक्तं 'अर्थस्याखण्डत्वं च प्रकारताविशेष्यतादिविषयताशून्यत्वम्'' । तदसत् । त्वद्रीत्या असत्यतिव्याप्तेः । सस्वरूपत्वविवक्षायां स्वरूपत्वनिरूपित-विषयतादिप्राप्त्या विषयताशून्यत्वस्यासम्भवः । एतादृशाखण्डत्वात्मकसखण्डत्व-प्राप्त्या व्याहतं चैतत् इति यत्किञ्चिदेतत् । संसर्गागोचरप्रमाहेतुत्वं प्रातिपदिकमात्रार्थत्वमित्यादि तु न्यायामृतादौ बहुधा निराकृतं वेदितव्यम् ॥

किञ्चामात्ये प्रयुक्ते "राजा त्वमसीति" वाक्ये इव "तत्त्वमसीति" वाक्येऽपि प्रसक्ताभेदस्योपचरितार्थत्वाङ्गीकारमात्रेण जायमानाबाधशाब्द-बोधीयविशेष्यतायाः तत्त्वंपदार्थभूतचैतन्ययोस्सिद्धत्वात् प्रकारताविशेष्यतादि-विषयशून्यत्वरूपमखण्डार्थत्वमप्रसिद्धमेव। न चोक्ताखण्डचैतन्यरूपलक्ष्योप-स्थित्यर्थमेव जहदजहल्लाक्षणावृत्त्याश्रयणम्। प्रकृतवाक्यादखण्डार्थबोधस्य सिद्धान्त इष्टत्वात् इति वाच्यम्। त्वदिष्टसिद्धान्तानुसारेण शब्दवृत्त्यादेरकल्पनीयत्वात्। अबाधशाब्दबोधानुसारेण सिद्धार्थस्यैव स्वीकर्तव्यत्वात्। तस्यैव सिद्धान्तत्वात्। अन्यथा अन्योन्याश्रयाद्यपरिहारः। त्वदिष्टसिद्धान्तलाभायाप्रामाणिकवृत्तिकल्पनं तादृशकल्पितवृत्तिमाश्रित्योक्तवाक्यादखण्डार्थरूपत्वदिष्टसिद्धान्तलाभ इति। अतः प्रसिद्धां जहल्लक्षणां अजहल्लक्षणां वाऽऽश्रित्याबाधशाब्दबोधसम्पादनसम्भवे जहदजहल्लक्षणावृत्तेः क्वाप्यनवस्थानात् सर्वत्र शाब्दे पदार्थानां विशेष्यतया प्रकारतया वा भानस्याभ्युपगन्तव्यत्वाद् विशेष्यताप्रकारतादिविषयवस्तूपस्थितेरेवाभावेन न त्वदुक्ताखण्डार्थसिद्धिः॥

एतेन यत्परोक्तं "प्रकृतवाक्यार्थभूताखण्डचैतन्यं हि न पराभिमतसंसर्गवत् प्रकारतया वा भासते। किन्तु विगलिताशेषविशेषं शुद्धचैतन्यमेव। अतः शक्तिजन्यां विशेष्यतयोपस्थितिं त्यक्त्वा लक्षणाजन्यां शुद्धवस्तूपस्थितिमुररीकुर्वन्ति वेदान्तिनः। अत एवायं वाक्यार्थबोधो निर्विकल्पः सम्पद्यते। शुद्धपदार्थस्यैव वाक्यार्थत्वादिति रहस्यम्" इति तत्सर्वं स्वमनोविलासविजृम्भणप्रकाशनमात्रमिति वेदितव्यम्। शब्दमर्यादामनुसृत्य "तत्त्वमस्यादि" वाक्यार्थभानाभ्युपगमे चैतन्यस्य प्रकारतया विशेष्यतया वा भानस्यापरिहार्यत्वात्। शक्तिजन्यं विशेष्यतयोपस्थित्यादिकं शाब्दमर्यादाक्रममुल्लङ्घ्य त्वत्कल्पितलक्षणया वस्तूपस्थित्युररीकरणं च वेदान्तित्वविघातकं अवैदिकत्वसंस्थापकमिति त्वदभिमितं विगलिताशेषविशेषं शुद्धचैतन्यमेव विगलितं भवति। निर्विकल्पकबोधश्चाप्रामाणिक एव। सर्वत्र सविकल्पकबोधस्यैव जागरूकत्वात्।

त्वयाऽपि वाक्यार्थप्रयोगवैयर्थ्यमाशंक्य केनापि निमित्तेनास्तमितनिज-यथात्म्यज्ञानस्य सम्बोध्यस्य स्वयाथात्म्यप्रत्यभिज्ञानाय त्वंपदघटितवाक्यार्थ-प्रयोगस्यावश्यकत्वं वदता सविकल्पकबोधरूपस्य वाक्यार्थबोधस्यैव भ्रमनिवर्त-कत्वमङ्गीकुर्वता ह्यजागलस्तनायितो निर्विकल्पकबोधः परित्यक्त एवेति नानेन त्वदभिमतमहावाक्येन त्वदभिमताखण्डार्थसिद्धिः। विगलिताशेषविशेषं शुद्धचैतन्य-मेव निजयाथात्म्यमिति यत्त्वद्धार्दं तत्कपोणिगुडायितम्। जीवब्रह्मधर्मादेरवि-नाशित्वात्।

एतेन ''राजसूनोस्स्मृतिप्राप्तौ व्याधभावो निवर्तते। यथैवमात्मनोऽज्ञस्य तत्वमस्यादिवाक्यतः'' इति सुरेश्वरोक्तमपि प्रत्युक्तं भवति। व्याधभावभ्रम-निवर्तकस्मृतिविषयस्य राजसुनुत्वस्य मानान्तरसिद्धत्वमिव अज्ञत्वादिभ्रमनिवर्तक-स्मृतिविषयस्य त्वदभिमतस्य ब्रह्मभावस्य मानान्तरासिद्धत्वेन तद्दृष्टान्तीकरणा-योगात्। एतद्वाक्येनैव ब्रह्मभावबोधाङ्गीकारात्। निवर्त्यनिवर्तकभावमात्रे दृष्टान्तीकरणं च एतद्वाक्यजन्यस्य त्वदभिमतस्य निर्विकल्पकबोधस्य निवर्तकत्वाभावेनायुक्तम्। सविकल्पकबोधस्तु अखण्डार्थत्वघातक इति ॥ विस्तरस्तु श्रीमन्न्यायसुधा - न्यायामृतादाववगन्तव्यः। तथा च शाब्दमर्यादां समाश्रित्य तत्वमस्यादिवेदवाक्ये प्रविचारितेऽद्वैतस्यासिद्धिःद्वैतस्यैव सिद्धिरिति निष्कर्षः ॥

एवं विरुद्धभागत्यागरूपायाः जहदजहल्लक्षणाया निराकरणात् ''प्रज्ञानं ब्रह्मेत्यदौ'' च विरुद्धभागत्यागमाश्रित्य शुद्धचैतन्यपरतया सम्पाद्यमानः वाक्यार्थबोधोऽनुपपन्नः ॥

''चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपीति'' विद्यारण्यवाक्याद् जीवगतेक्षणश्रवणादिप्रेरकं चतुर्मुखादिदेवमानुषादिगतमेकं चैतन्यं ब्रह्म मय्यपि वर्तत इति बोधसम्भवेन ''गृहे देवदत्त'' इति वाक्यादिव बहिरन्तर्भावसम्बन्धज्ञाप्यद्वैतस्यैव सिद्ध्या तद्वाक्योदाहरणम् त्वदिष्टाद्वैतासाधकमेव ॥

अनया दिशा ''अहं ब्रह्माऽस्मि'' ''अयमात्मा ब्रह्म'' इत्यादीनि वाक्यान्यपि नाद्वैतसाधकानि। प्रत्युत द्वैतबोधकानीति प्रत्येतव्यानि। अप्रामाणिक-जहदजहल्लक्षणावृत्त्याश्रयणेनाद्वैतबोधसम्पादनस्य त्याज्यत्वं सप्रमाणकलक्षणावृत्तेः समाश्रयणेन द्वैतबोधसम्पादनस्य ज्यायस्त्वं पूर्वं बहुधोपपादितं द्रष्टव्यम्। एतासां श्रुतीनां परब्रह्मनारायणपरत्वस्य श्रीमद्भाष्यादौ सयुक्तिकं सम्प्रमाणं प्रदर्शितत्वात् विद्यारण्यकल्पितार्थः प्रेक्षावद्भिरनादरणीय एव। ''द्वा सुपर्णासयुजा सखायौ'' ''सत्यं भिदा सत्यं भिदा सत्यंभिदा'' इत्यादिभिः जीवेशात्यन्तभेदबोधकैः विस्पष्टवेदवचनैः भेदग्राहिनिर्दुष्टसाक्षिप्रत्यक्षेण तदुपोद्बलितलिङ्गैश्च विरोधोऽद्वैत-वादस्यापरिहार्य इत्यादयो विशेषाः श्रीमद्भाष्यटीकान्यायामृतपरिमळादौ जिज्ञासुभिर्विशेषतो द्रष्टव्याः।

प्रकृतमनुसरामः। सर्वप्रमाणविरुद्धं प्रमाणैकेनापि रहितं च सर्वदार्शनिकैश्च निन्दितं जीवब्रह्माद्वैततत्वं प्रतिपादयच्छाङ्कारदर्शनमनन्तदोषदुष्टं शुभैः हेयमिति सिद्धम्। पूर्वोक्तरीत्यैतद्दर्शनस्य दुष्टत्वमेतत्प्रवर्तकस्यापि शङ्कराचार्यस्य परमदुष्टत्वं व्यवस्थापयति। चेतनस्य परमदुष्टत्वं नाम अज्ञानान्यथाज्ञान हरिवायुद्वेषदुराग्रह-जगद्वञ्चनकामक्रोधादिदोषग्रस्तस्वरूपत्वम्। एतदेव हि जीवस्य तामसत्वं दैत्यत्वं नाम। एवं त्वदीयशङ्कराचार्यस्य दुर्दर्शनप्रवर्तनेनैव दैत्यस्वरूपत्वे सामान्यतो विज्ञाते विशेषजिज्ञासयां क्रोधवशनामकदैत्यगणप्रधानो मणिमान्नाम श्रीहरिवायुवेद-शास्त्रद्वेषी श्रीकृष्णभक्ताग्रेसरमुख्यप्राणावतारश्रीभीमसेनेन पूर्वं संहृतः पुनरिदानीं कलियुगे दुर्योनौ सञ्जातः सन् स्वस्वरूपोचितं दुर्मतप्रवर्तनादिकं चकारेति विशेषज्ञानं सात्विकपुराणवाक्यानि समुत्पादयन्ति। एतादृशो दुष्टस्तामसः शङ्कराचार्यः कथं श्रीश्रीशपौत्रस्य श्रीमुख्यप्राणप्रियशिष्यस्य श्रीहरिगुरूभक्ताग्रेसरस्य देवेन्द्रादि-सकलसद्वैष्णवगुरोः पार्वतीपतेः महारुद्रदेवस्यावतारः स्यात्?। एतादृशसङ्करस्य शिवावतारत्वबोधकानि पुराणवाक्यानि कथं वा प्रमाणानि, भवेयुः। तस्मादप्रमाणभूतानि मोहकानि स्वकपोलकल्पितानि च वाक्यानि समुदाहृत्य

शिवावतारः शङ्कर इत्यादिवर्णनं मा. मञ्जरीकारकृतं जगद्वञ्चक शङ्करशिष्यपरम्परानुगुणं जगद्वञ्चनमेवेत्यलम्। तथा च नायं शङ्करोऽद्वैताचार्यः पार्वतीपतिशिवावतारः। किन्तु दैत्य एवेति तत्प्रतिपादनपरा श्रीमणिमञ्जरी मान्या सर्वसुजनैः सेव्येति सिद्धम्। अत्र प्रमाणपरिशोध उत्तरत्र क्रियते।

## इति गोविन्दादिविशेषणत्रयवैभवम्

तदेवं मणिमञ्जर्यामाद्यपद्ये "गोविन्द"इतिविशेषणेन विष्णोः सर्वोत्तमत्वं सर्ववेदप्रतिपाद्यत्वं जगज्जन्माद्यष्टकर्तृत्वं अनन्तकल्याणगुणाकरत्वादिकं प्रसाध्य श्रियःपतित्वकथनेन ब्रह्मरुद्रादिवन्द्यत्वादिकं सम्प्रदर्श्य उर्वरितायाः भगवदुपासन-मुख्याधिष्ठानशङ्कायाः तथा परमप्रामाणिकैतद्द्वैतसिद्धान्तप्रतिष्ठापकाचार्यवर्य-श्रीमदानन्दतीर्थभगवत्पादाचार्यवर्यमूलस्वरूपाकांक्षायाश्च निवृत्तये प्रवृत्तमिदं विशेषणं **"श्रीमदानन्दतीर्थार्यवल्लभमिति"**। शर्वशक्रादिसमस्तादेवताद्युत्पादकभारतीपतिः मुख्यप्राण एव श्रीमान्। स एव भगदुपासनायाः मुख्याधिष्ठानमिति सूचनेन प्रथमशङ्काया निवृत्तिः। स मुख्यप्राण एवानन्दतीर्थः - श्रीमध्वाचार्यः। स एव आर्य = जगदाचार्य इति कथनेन द्वितीयाशङ्क्याः निवृत्तिरिति मन्तव्यम्॥ तस्य श्रीहरिः वल्लभः = परमप्रियः, तथा सः प्राणात्मा मध्वाचार्यः वल्लभो यस्य श्रीहरेरिति कथनेन श्रीमन्मध्वचार्यस्य ज्येष्ठत्वं सर्वजीवश्रेष्टत्वं भगवत्प्रेष्ठत्वं च सूचितम्। अत्र सर्वत्र श्रुतिस्मृतिसूत्रसद्युक्तयः प्रमाणमिति बोधनाय प्रामाणिकत्वार्थकार्यपदप्रयोगः।

तथाहि। भारतीपतेः श्रीमुख्यप्राणस्य शिवादिसर्वदेवोत्पादकत्वे श्रुतिः।

i. वायोर्वाव रुद्र उदेति। वायौ विलीयते।
तस्मादाहुर्वायुर्देवानां श्रेष्ठ इति॥

ii. वायुनाहि सर्वाणि भूतानि नेनीयन्ते॥

iii. स प्राणमसृजत। प्राणात् श्रद्धां खं वायुर्ज्योतिरापःपृथिवीमिन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्रा कर्म लोका लोकेषु......असृजत। अत्र मनो नाम मनोभिमानी रुद्रः। तस्य प्राणात्सृष्टिः श्रूयते। तथा

iv. प्राणो वायुरिति प्रोक्तस्तत्पत्नी नाम भारती।
रूपं तु तत्सुतो रुद्रो वशे प्राणस्य तद्वयम्॥

v. बलमिन्द्रस्य गिरिशो गिरिशस्य बलं मरुत्।
मरुतस्तु हरिः साक्षान्न हरे र्बलमन्यतः॥
अत्र श्री हर्यधीनमुख्यप्राणाधीनत्वं गिरिशस्य रुद्रस्य स्पष्टं श्रूयते।

vi. अश्वमेधः क्रतुश्रेष्ठः ज्योतिश्रेष्ठो दिवाकरः।
ब्राह्मणो द्विपदां श्रेष्ठो देवश्रेष्ठस्तु मारुतः॥
अत्र शिवादिसर्वदेवेभ्यः श्रेष्ठत्वमुच्यते वायोः॥

vii. वायुर्भीमो भीमनादो महौजाः सर्वेषाञ्च प्राणिनां प्राणभूतः। अनावृत्तिर्देहिनां देहपाते तस्माद्वायुर्देवदेवो विशिष्टः।

viii. तं हा सुराः विदध्वसुः। यथाश्मानमाखणमृत्वा विध्वसेतैवम् .......... इत्यादौ शिवादीनां कल्याद्यसुरबाध्यस्वरूपत्वं तथा मुख्यप्राणस्य च कल्याद्यबाध्यस्वरूपत्वमुक्ता भगवदुपासनाया मुख्याधिष्ठानत्वं श्रूयते। तदनुग्रहेण शिवादीनामपि कल्याद्यबाधः कथ्यते। एवमन्यान्यपि वाक्यानि द्रष्टव्यानि। तथा च शङ्करादिकं सर्वं विश्वं मुख्यप्राणवशे स्थितम्। स च प्राणो श्रीहर्यैकाधीन इति सिद्ध्यति।

एवं निर्दुष्टस्वरूपः श्रीमुख्यप्राणः सर्वजीवोत्तमः श्रीमन्नारायणैकमुख्यभक्तः सकलदेवादिसज्जीवोद्धारकः स्वोपदेशेन गरुडशेषरुद्रादीनां सर्वेषां भगवदनुग्रहप्रापकः सर्वज्ञः मुख्यजगद्गुरुः मूल इवावतारेष्वपि अप्रतिहतस्वीयज्ञानबलैश्वर्यादिसद्गुणः भगवत्कार्यसाधकतमः सर्वदा रारजतेति श्रुतिस्मृतयो वर्णयन्ति।

तथाहि । प्राणाग्निसूक्ते

१. बळित्था तद्वपुषेऽधायि दर्शतं देवस्य भर्गः सहसो यतोऽजनि । यदीमुपह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः । पृक्षो वपुः पितुमानित्य आशयेद्वितीयमा सप्त शिवासु मातृषु । तृतीयमस्य ऋषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ।... यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति...... ।

अत्र स्पष्टं मुख्यप्राणस्य हनुमद्रूपं भीमरूपं मध्वरूपं च संवर्णितम् । हृदयगुहासंस्थितं श्रीहरिं श्रुतिस्मृतिसद्युक्तिभिः समालोड्य जगतः बोधयतीत्युक्त्या तादृशसिद्धान्तसंस्थापकः श्रीमन्मध्वाचार्यः अत्र प्रतिपादित इति विस्पष्टं ज्ञायते । तथा

२. सप्तस्वसॄः अऋषीः वावशानः । विद्वान् मध्वः उज्जभारदृषेकम् ।

३. मध्वो वो नाम मारुतं यजत्रा ।

४. अजीतयेऽहतये पवस्व स्वस्तये सर्वतातये बृहते इत्यादिषु पवमान - पूयमानसूक्तेषु श्रीमध्वाचार्यमहिमा संवर्णितः समुपलभ्यते ।

५. तदस्य प्रियमभिपाथोऽस्यां नरोयत्र देवयवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ।

अत्र श्रीहरिभक्ताग्रेसरः मध्वरूपी वायुः संवर्णितः ।

६. यत्रासुपर्णा.............यस्मिन्वृक्षे मध्वदः सुपर्णा....॥

७. अस्मभ्यं रोदसी रयिं मध्वो वाजस्य सातये ॥

८. अस्मभ्यमिन्द्र विन्द्रयुर्मध्वः पवस्व धारय ।

९. मधुवाता ऋतायते.........माध्वीर्गावो भवन्तु नः ॥

१०. ऋजुस्समानोविज्ञाता महाध्याता महागुरुः ।
हनूमन् भीम आनन्द इत्यादिबहुरूपिणः ॥ इति पैङ्गिश्रुतिः ।

एवमादयः श्रुतयः मुख्यप्राणावतारमहिमाप्रतिपादकाः दिङ्मात्रेण प्रदर्शिताः । प्रमाणे पर्यालोचिते सर्वे वेदाः मुख्यप्राणप्रतिपाकाः सन्ति । तत्र प्रमाणम् ।

११. द्वावात्मानौ हि देवेषु द्वौ प्राणौ द्वौ च चेतनौ ।
अज्ञानाभिभवास्पृष्ठौ वायुर्नारायणश्च तौ ॥

सर्ववेदोदितौ तस्मादेतौ द्वावेव नापरः ।
अन्ये चैव मितैः शब्दैरुच्यन्ते नामितैः कचित् ॥

तथा च सर्ववेदोदिताप्रतिहतज्ञानादिमहिमा जगद्गुरुर्मुख्यप्राणो मध्वरूपी भूत्वा सज्जनानुद्दधार इत्यत्र पूर्वोक्तश्रुत्यनुसाराणि पुराणानि च सन्ति । तथाहि ।

हरिवंशे -

१२. त्रिकोटिमूर्तिसंयुक्तौ त्रेतायां राक्षसान्तकः ।
हनूमानितिविख्यातो रामकार्यधुरंधरः ॥

स वायुर्भीमसेनोऽभूत् द्वापरान्ते कुरूद्वह ।
कृष्णं सम्पूजयामास हत्वा दुर्योधनादिकान् ॥
द्वैपायनस्य सेवार्थं बदर्यां च कलौ युगे ।
यतिरूपधरो वायुः भविष्यति न संशयः ॥

भाववृत्ते :-

१३. ''हनुशब्दो ज्ञानवाची हनुमान् मतिशब्दितः ।
रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि ।

भूतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः ।
ऋगाद्या इतिहासाश्च पुराणं पञ्चरात्रकम् ।
प्रोक्ताः सप्त शिवास्तत्र शयो भीमस्ततस्मृतः ।
मध्वित्यानन्द उद्दिष्टः वेति शास्त्रमुदाहृतम् ।
मध्व आनन्दतीर्थः स्यात् तृतीया मारुतीतनुः ॥
इति सूक्तगतं रूपत्रयमेतन्महात्मनः ।
यो वेद वेदवित्स स्यात् तत्ववित्तत्प्रसादतः ॥''

अत्र बळित्थासूक्तादौ मुख्यप्राणरूपत्रयं प्रतिपादितं ज्ञेयमिति नाम निर्वचनपूर्वकमुपपादितम् ।

१४. यजुःसंहितायाम् -

साधको रामवाक्यानां तत्समीपगतस्सदा ।
हनूमान् प्रथमो ज्ञेयः भीमस्तु बहुभुक् पितोः ।
पृतनाक्षयकारी च द्वितीयस्तु तृतीयकः ।
पूर्णप्रज्ञस्तथाऽऽनन्दतीर्थनामा प्रकीर्तितः
दशेति पूर्णमुद्दिष्टं सर्वं पूर्णमिहोच्यते ।
प्रज्ञा प्रमितिरुद्दिष्टा पूर्णप्रज्ञस्तु संस्मृतः ॥
आ समंतात् पतित्वे तं गूढं कलियुगे हरिम् ।
असत्यमप्रतिष्ठं च जगदेतदनीश्वरम् ।
वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति ।
येन विष्णोर्हि वर्पाख्यान् गुणानाज्ञासिषुः परान् ।
ईशानसः सूरयश्च निगूढान् निर्णयोक्तिभिः ।
त्रेतायां द्वापरे चैव कलौ चैते क्रमात् त्रयः ।
एतेषां परमोविष्णुर्नेता सर्वेश्वरेश्वरः ।
स्वयम्भुब्रह्मसंज्ञोऽसौ परस्मै ब्रह्मणे नमः ।

अत्र जगन्मिथ्यात्ववादिभिरद्वैतिभिर्निगूहितं विष्णुसर्वोत्तमत्वादितत्वं प्रतिपादयितुं श्रीमुख्यप्राणस्य मध्वावतार इति स्पष्टमुक्तम्। किञ्चात्र स्पष्टं वायोरवतारत्रय वर्णनपरतया बळित्थासूक्त विवरणं कृतम्। अनेन बळित्था सूक्तस्याग्निदेवतापरतया विद्यारण्यकृतं विवरणमयुक्तं ध्येयम्।

१५. स्कान्दपुराणे काशीखण्डे :- (अ ७१) दण्डतीर्थमाहात्म्ये

वायुमाहूय भगवानिदमाह सतां पतिः।
क्षिप्रं द्विजकुलं प्राप्य छिन्ध्यज्ञानं हृदि स्थितम्॥

ज्ञानासिना समर्थोऽसि त्वदन्यो न हि विद्यते।
इत्याज्ञां देवदेवस्य शिरसा धारयन्मरुत्॥

प्रादुरासीद्विप्रकुले क्षेत्रे भार्गवसंज्ञके।
आनन्दतीर्थनामेति गुरुणा ख्यापितो भुवि॥

अत्रावतारस्थल - कुल - गुरु - नामादिकं च वर्णितम्।

१६. कूर्मपुराणे श्रीविष्णुमाहात्म्ये :-

एवं धर्मेषु नष्टेषु शास्त्रेषु च कलौ युगे।
देवैर्विज्ञापितो विष्णुर्वायुमाज्ञापयिष्यति॥

उद्धरस्व महाबाहो मम धर्मान् सनातनान्।
इत्याज्ञप्तो भगवता कलौ वायुर्भविष्यति॥

मध्वनामा यतिरसौ सच्छास्त्राणि करिष्यति।
गीतायाश्चोपनिषदां भाष्याणि च करिष्यति॥

निरसिष्यति पाषण्डान् सच्छास्त्राणि महामतिः।
स्थापयिष्यति सद्धर्मान् सच्छास्त्रं व्याकरिष्यति॥

श्रोष्यन्ति मुनयः सर्वे शुकाद्या देवरूपिणः ।

अत्र शिवावतारशुकाचार्यस्य श्रीमध्वाचार्यशिष्यत्वं स्पष्टमुपपादितं ज्ञातव्यम् ।

१७. स्कान्दपुराणे श्रीविष्णुमाहात्म्ये :- (६ - ९ अध्यायेषु)

कलौ पाषण्डभूयिष्टे धर्मलेशविवर्जिते ।
वैवस्वतान्तरे प्राप्तेत्वष्टाविंशे कलौ युगे ।

त्रैपुरा भारते युद्धे निहता राक्षसा भुवि ।
यदा प्रवर्तयिष्यन्ति मार्गं पाषण्डगोचरम् ॥

तदा संप्रार्थितो देवैर्भगवान् हरिरीश्वरः ।
तत्कर्म दक्षं विनतं मातरिश्वानमादिशत् ॥

वायुः सयतिरूपेण भविष्यति कलौ युगे ।
स दशप्रमतिर्भूत्वा कलौ धर्मान् वदिष्यति ॥

कृत्वा सच्चास्त्र सन्दर्भं स्थापयिष्यति सत्पदम् ॥

अत्र श्रीहरिवायुद्वेषिभिः राक्षसादिभिरद्वैतादिपाषण्डमतप्रवर्तनं, श्रीहर्याज्ञया मुख्यप्राणेन मध्वरूपेण सकलपाषण्डमतनिराकरणं सच्छास्त्रस्थापनं च वर्ण्यते । मणिमञ्जरी - मध्वविजयप्रामाण्यव्यवस्थापकं चैतत् ॥

१८. पाञ्चरात्रे :-

अहो भाग्यमहोभाग्यं मध्वमार्गानुवर्तिनाम् ।
देवो रमापतिः साक्षाद्गुरुः श्रीभारतीपतिः ॥

देवदेवो यतः शुद्धो वायुर्देवो जगद्गुरुः ।
हरिप्रियस्ततो ग्राह्यमन्नाद्यं नात्र संशयः ॥

इति । अत्र निर्दुष्टत्वात् मुख्यप्राणनैवेद्यस्वीकारसमर्थनं कृतम् ॥

१९. ब्रह्माण्डपुराणे रजतपीठमाहात्म्ये :-

''हनुमद्भीममध्वाख्यास्त्रयो वायुसुता इमे ।
तं मध्वं मारुतं सर्वे परिवारतया सदा ॥

संसेवितुं सुरा भूमाववतेरुरिति श्रुतम् ।
ते च तच्छिष्यतां प्राप्य तन्मार्गं समघोषयन् ॥

तेषु मुख्यौ विष्णुतीर्थपद्मनाभाख्ययोगिनौ ।
अत्यक्तदेहस्तत्राद्यः प्रवर्तयति तन्मतम् ॥

बदर्यां व्यासदेवोक्तौ गुरोः प्रीत्यै पुनः कलौ ।''

इत्यादि । अनेन श्रीमध्वशिष्यतां प्राप्तानां तत्तद्देवतारूपत्वसिद्ध्या प्राज्ञैस्तद्वर्णनं संगच्छते ।

२०. वायुपुराणे :-

''वायोराज्ञां पुरस्कृत्य मणिभद्रः स एव हि ।
मध्यगेहस्य भार्यायां प्रवेशं कृतवान् प्रभुः ॥

नवमासावसाने तु स्वयं गत्वा बलात्मकः ।
बर्हिनिष्कासयामास नवजीवं तथैव हि ॥

स्वयं प्रवेशं कृतवान् प्राणदेवो महाबलः ।
सोऽपि सांशत्वमापन्नो बलदेवस्य चाज्ञया ॥

कुबेरभृत्यं तं प्राहुः............

इत्यादिना श्रीमध्वाचार्याणां पितृनामनिर्देशपूर्वकं लोकविलक्षणजनन-क्रमवर्णनं कृतम् ॥

२१. स्कान्दपुराण उत्तरखण्डे :-

एवं तमसि संप्राप्ते ब्रह्मरुद्रादयस्तदा ।
शरण्यं शरणं जग्मुः वासुदेवमनामयम् ॥

तस्याज्ञया महाबाहुर्वायुः सर्वसुरोत्तमः ।
रौप्यपीठे मध्यगेहे निर्विकारेऽप्यजायत ॥

सनकादि महायोगि सम्प्रदायकरो यति ।
अच्युत प्रेक्षणामासौ मायिभिः परिवेष्टितः ॥

यत्याश्रमं ततः प्राप्य स मध्वः परमहंसराट् ।
ततः शारीरकं श्रुत्वा निराचक्रे महाप्रभुः ॥

एकविंशत्कुभाष्याणि प्रदूष्यागमतर्कतः ।
श्रीमत्सुब्रह्मसूत्राणां भाष्यं चक्रे परं ततः ॥

श्रीमद्गंगातटे विष्णुं स्थापयेद्यो नरोत्तमः ।
यदक्षरं लिखन् यस्तु स नरस्तत्समो भवेत् ॥

महाभारततात्पर्यं तथा भाष्यं पराणि च ।
वेदव्यासाज्ञया सर्वं शुभं चक्रे महामतिः ॥

इत्यत्र एकविंशतिसंख्याकाणां शाङ्करादीनां दुर्भाष्याणां निराकरणपूर्वकं श्रीमद्ब्रह्मसूत्रभाष्यादिप्रणयनं श्रीमध्वकृतं वर्णितम् ॥

२२. स्कान्दपराणे :-

''सयोगी मातरिश्वांशो मध्वो ध्वस्तदुरागमः ।
स्वयमभ्यर्च्य देवांशो कृष्णं कलिमलापहम् ॥

नवम्यां प्रातरेवासौ माघे मकरगे रवौ ।
प्रतिपदे बदरिकां शुक्लपक्षे सतां गतिः ॥

तच्छिष्याश्च महात्मानः यतयः कृष्णमादरात् ।
पूजयिष्यन्ति विधिवत् तेषां वंशधारस्तथा ॥

तमिमं देवदेवेशं भक्तेष्टदमखण्डितम् ।
श्रीमध्वहृदयावासं नित्यं नमत सेवत ॥

अत्र श्रीकृष्णप्रतिष्टापनादिकं, माघमासशुद्धनवम्यां बदरीकाश्रमप्रवेश-रूपान्तर्धानं तच्छिष्ययतिपरम्पराकृतं श्रीकृष्णपूजनादिकं समुपवर्णितम् ॥

२३. वराहपुराणे :-

''माघे तु रथसप्तम्यां प्राणदेवो महाबलः ।
मध्यगेहाख्यगेहे तु.....वासुदेवेति विख्यातः ॥

द्वात्रिंशल्लक्षणैर्युक्तो गर्भदुःखादिवर्जितः ।
स एवानन्दतीर्थेति भुवि ख्यातोऽखिलैर्जनैः ॥

इत्यादि ॥ अत्र द्वात्रिंशल्लक्षणोपेतशरीरयुक्तत्वं पितृकृतवासुदेवेतिनामभाक्त्वं इत्यादि श्रीमध्वाचार्यस्य समुपवर्णितम् ॥

२४. गरुडपुराणे :-

''रामावतारे हनुमान् रामकार्यार्थसाधकः ।
स एव भीमसेनस्तु जातो भूम्यां महाबलः ॥

कृष्णावतारे विज्ञेयो मरुदंशः प्रकीर्तितः ।
मणिमन्नाम दैत्यस्तु संकराख्यो भविष्यति ॥

सर्वेषां संकरं यस्तु करिष्यति न संशयः ।
धर्मान् भागवतान् सर्वान् नाशयिष्यति सर्वथा ॥

तदाभूवौ वायुदेवो भविष्यति न संशयः ।
प्रज्ञया सदृशोयस्य नास्ति लोके चतुर्दश ॥

अतस्स प्रज्ञया पूर्णो भविष्यति न संशयः ॥

इत्यत्रावतारत्रयवर्णनं तथा पूर्णप्रज्ञेति नामनिर्वचनादिकं समुपलभ्यते ॥

२५. तथा ब्रह्मपुराणे क्षेत्रकाण्डे वेङ्कटगिरिमाहात्म्ये शङ्खलिखितसंवादे :-

त्वं चापि गच्छ शैलेन्द्रं पूर्वं स्वर्णमुखीतटे ।
यत्र ब्रह्मशिलानाम तन्मध्ये च वर्तते ॥

अगस्त्य तपसा पश्चात् गयासान्निध्यमत्र हि ।
पादा ईशान विष्ण्वादिदेवानां तत्र संति हि ॥

यतिरूपो मातरिश्वा अष्टविंशतितमे कलौ ।
अवतीर्य वसत्यत्र मध्वनामा वरं विभोः ॥

अवाप्य सयसा पुण्यः प्रीत्या चागस्त्ययोगिनः ।
तत्प्रार्थितालये पुण्ये चातुर्मास्यं करिष्यति ॥

शुकः श्रोष्यति सच्छास्त्रं पद्मतीर्थादिहागतः ।

इत्यादौ वेङ्कटाद्रौ श्रीमन्मध्वाचार्यकृतचातुर्मास्यव्रताचरणकाले सच्छास्त्र-पाठप्रवचनादिकं शिवावतारैः शुकाचार्यैस्तच्छ्रवणं कृतमिति वर्णितम् ।

२६. युक्तिमल्लिकायां समुद्धृते वायुपुराणे -

यस्यर्चो मध्वनामाङ्काश्लोकानेका दशा गृणन् ।
समध्वो वैदिकाचार्यो गुरुर्जयति दुर्जनान् ॥

वायोर्दिव्यानि रूपाणि पद्मत्रययुतानि च ।
त्रिकोटिमूर्तिसंयुक्त स्त्रेतायां राक्षसान्तकः ॥

हनुमानितिविख्यातः रामकार्यधुरन्धरः ।
स वायुर्भीमसेनोऽभूत् द्वापरान्ते कुरू द्वहः ॥

कृष्णं संपूजयामास हत्वा दुर्योधनाकिान् ।
द्वैपायनस्य सेवार्थं बदर्यां तु कलौ युगे ॥

वायुश्च यतिरूपेण कृत्वा दुःशास्त्रखण्डनम् ।
ततः कुलियुगे प्राप्ते तृतीयो मध्वनामकः ॥

भूरेखादक्षिणे भागे मणिमद्भर्वं शान्तये ।
धिक्कुर्वन् तत्प्रभां सद्योऽवतीर्णोऽत्रद्विजान्वये ॥ इति ॥

२७. श्रीविश्वपतितीर्थीयवायुस्तुतिटीकायां समुद्धृते वेङ्कटेशमाहात्म्ये -

सप्तसंवत्सरादूर्ध्वं गत्वाबदरिकाश्रमम् ।
प्रपेदे सर्वशास्त्राणि वोंश्चैवाव्ययानपि ॥

इत्थंहि सर्वविद्याश्च व्यासदेवान्महात्मनः ।
अवाप्तसर्वशास्त्रोऽसौ वटुस्तदिदमब्रवीत् ॥ इति ॥

२८. महाभारते सनत्सुजातीये -

असाधना वाऽपि ससाधना वा समानमेतद्दृश्यते मानुषेषु ।
समानमेतदमृतस्योत्तरस्य मुक्ता स्तत्र मध्वनुतं समापुः ॥ इति ॥

अत्र मध्वरूपेण वायुदेवेन नुतं - स्तुतं परब्रह्म श्रीहरिं - समापुरित्युक्तम् ।

२९. नाडीग्रन्थे चतुर्मुखनाड्यां :-

अद्वैतव्याकुले लोके मध्वाख्यो ब्राह्मणोत्तमः ।
विष्णुभक्त्यादिसम्पूर्णो द्वैतशास्त्रप्रवर्तकः ॥

योगिवर्यः स मध्वाख्यो गुरुः सत्यस्य कारकः ।
गुरोरनुग्रहादेव द्वैतशास्त्रं करिष्यति ॥

३०. भविष्यत्पर्वणि :-

प्रथमो हनुमान्नाम द्वितीयो भीम एव च
पूर्णप्रज्ञः तृतीयस्तु भगवत्कार्यसाधकः ॥

३१. श्रीमदानन्दतीर्थभगवत्पादाचार्यवाक्यं च :-

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः
मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥

अत्र श्रीमन्मध्वाचार्यैरेव स्वस्य मुख्यप्राणावतारत्वं हनुमद्भीमरूपाभ्यां पूर्वं भगवत्कार्यसाधकत्वं च समुपवर्णितम् । श्रीमन्मद्वाचार्यकालीनैरेव तच्छिष्यैः श्रीविष्णुतीर्थ-त्रिविक्रमपण्डिताचार्यप्रभृतिभिस्तदानीमेव स्वस्वग्रन्थे विनिवेशित-वाक्यानि श्रीमध्वाचार्याणां मुख्यप्राणावातारत्वावबोधकानि संति शताधिकनि । तदुत्तरकालीनाः श्रीमज्जयतीर्थ - व्यासराज - वादिराज - रघूत्तम - राघवेन्द्र-तीर्थादि ज्ञानिपरम्परा च स्वस्वग्रन्थे श्रीमध्वाचार्याणां मुख्यवाय्ववतारत्व प्रतिपादनतत्परा च प्रमाणम् ।

ननु स्वेनैव स्वस्य देवस्वरूपत्ववर्णनं कथं युक्तं स्यात् इति चेन्न श्रीकृष्णेन स्वस्य परदेवतात्वादिवर्णनस्येव महद्भिराधिकारिकैः प्रमाणसिद्धस्वस्वरूप-वर्णनस्यात्यन्तयोग्यत्वात् । अन्यथा सच्छिष्याणां स्वस्वरूपविषये विप्रतिपत्ति-प्रसङ्गात् ।

ननु दार्शनिकान्तरैः न तथा कृतमिति चेत् । मास्तु । किमेतावता । सति

प्रमाणे परिज्ञाने प्रयोजने च स्वेन स्वस्वरूपवर्णनस्य न्याय्यत्वात्। दर्शनान्तरेषु च क्वचिदद्वैतस्य परमार्थत्वात् क्वचित्तारतम्याभावात् क्वचिच्चैतन्याभावात् तत्तद्दार्शनिकैः स्वस्वरूपस्य देवतात्ववर्णनमन्येषां च दैत्यत्वादिवर्णनं तत्तद्दर्शनाननुगुणमेव। कथंचित्तच्छिष्यैर्वर्णितं च हास्यास्पदं भवति इति ज्ञातव्यम्।

अत एवाद्वैतमतप्रवर्तकशङ्कराचार्यस्य शिवावतारत्वादिकल्पनं दार्शनिकान्तराणां दैत्यत्वादिवर्णनं च मा. मञ्जर्यादिषु कृतं तद्दर्शनविरुद्धमिति केवलं माध्वद्वेषमूलमेव।

श्रीमन्मध्वमते तु जगतः सत्यत्वात् विष्णोः सर्वोत्तमत्वात् मुख्यप्राणस्य जगद्गुरुत्वात्, जीवेषु त्रैविध्यात् सज्जीवानामेव मुक्तियोग्यत्वात्, दुर्जीवानां निन्द्यत्वात्, हरिवायुद्वेषिदुर्जीवनिन्दनस्य मोक्षसाधनत्वात् हरिगुरुभक्तसज्जीवप्रशंसनस्य तत्तद्देवतास्वरूपावतारादिज्ञानस्य च मोक्षसाधनत्वात् मध्वाचार्यादीनां देवतास्वरूपनिश्चयः आवश्यकः। तथा शङ्करप्रभृतीनां दार्शनिकान्तराणां दैत्यस्वरूपनिश्चयश्चावश्यकः। तस्माद्वेदशास्त्रादिप्रमाणानुसारेण दार्शनिकाचार्याणां विषये देवदैत्यस्वरूपविचारस्यारम्भणीयत्वं मध्वमत एव युज्यते। परमते च तत्तदाचार्यस्य देवतात्वज्ञानं वा पराचार्यस्य दैत्यत्वज्ञानं वा तत्तद्रीत्या न मोक्षादिपुरुषार्थहेतुरिति अद्वैतादिमते देवदैत्यस्वरूपविचारः अनारम्भणीय एवेति दिक्॥

तदेवं पूर्वप्रदर्शितप्रमाणगणैः शिवादिदेवगणसेवितमुख्यप्राणावतारः श्रीमन्मध्वाचार्यः श्रीहर्युपासनमुख्याधिष्ठानमिति सूचकेन "श्रीमदानन्दतीर्थार्यवल्लभमिति" विशेषणेन, द्वैतसिद्धान्तप्रतिष्ठापकाचार्य श्रीमन्मध्वाचार्यशिष्यप्रवरः शिवोऽपि वैष्णवाग्रेसरः द्वैताचार्य एव भवति, न तु द्वैतविरोध्यद्वैताचार्यः सङ्करस्वरूपः इत्यपि मणिमञ्जर्यां सूचितम्।

तथा हि। अद्वैतमतप्रवर्तकः सङ्करो न शिवावतारः। प्रमाणाभावात्। किन्तु

मणिमन्नामक दैत्य एव प्रमाणसद्भावात्।

ननु कथमत्र प्रमाणाभावः। शङ्कराचार्यस्य शिवावतारत्वे यजुर्वेदे चतुर्थाष्टके "नमः कपर्दिने च। व्युप्तकेशाय च नमः" इत्यत्र पाशुपतादिरूपेण कपर्दित्वं यतिवेषेण मुण्डितकेशत्वरूपव्युप्तकेशत्वमुक्तमिति चेन्न अत्र अद्वैतमतप्रवर्तक-शङ्कराचार्यस्य शिवावतारत्वबोधकपदाभावात्। मुण्डितकेशत्वस्य च परमहंसरूपे दूर्वाससि रुद्रावतारे सम्भवात्। दूर्वासरूपस्य च श्रीहरिवायुभक्तत्वं भागवतादिप्रमाणसिद्धमिति तस्यैवेतद्वेदप्रतिपाद्यत्वं योग्यम्।

अत्र मा. मञ्जरीकारेण श्रुत्यर्थोपबृंहणायोदाहृतस्कान्दीयवचनेऽपि

"कल्यब्धौ मज्जमानांस्तान् दृष्ट्वानुक्रोशतोऽम्बिके।<br>
ममांशभूतं देवेशि कलावपि तपोधनम्॥<br>
केरलेषु तदा विप्रं जनयामि महेश्वरि।<br>
भविष्यति महादेवि शङ्कराख्योऽथमस्करी॥"

इत्यादौ च श्रुत्युक्ते व्युप्तकेशपदार्थः शङ्कराचार्य इत्यस्य बोधकपदस्याभावात्। वीरभद्रसृष्टिकाले केशोत्पाटनरूपव्युप्ततायाः ग्रहणसम्भवात् विद्यारण्योक्तार्थस्यैव मुण्डितकेशतारूपतारूपस्य ग्राह्यतायां नियामकाभावश्च।

किञ्च

"अतथ्यानि वितथ्यानि दर्शयस्व महाभुज!।<br>
प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु॥

इत्यादिरूपभगवदाज्ञापालकस्य श्रीमहारुद्रदेवस्य मोहकवाक्यमेतदित्यप्रमाणाभूतस्य त्वदुक्तस्कान्दीयवचनस्य श्रुत्यर्थोपबृंहणरूपत्वमेव नास्ति।

एतेन मा. मञ्जर्यां "उपह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम्। श्रेष्ठं सवं सविता सा विषन्नो भीद्धो धर्मस्तदुषु प्रवोचमिति" ऋग्वेदवाक्यमादाय

प्रमाणे परिज्ञाने प्रयोजने च स्वेन स्वस्वरूपवर्णनस्य न्याय्यत्वात्। दर्शनान्तरेषु च क्वचिदद्वैतस्य परमार्थत्वात् क्वचित्तारतम्याभावात् क्वचिच्चैतन्याभावात् तत्तद्दार्शनिकैः स्वस्वरूपस्य देवतात्ववर्णनमन्येषां च दैत्यत्वादिवर्णनं तत्तद्दर्शनाननुगुणमेव। कथंचित्तच्छिष्यैर्वर्णितं च हासास्पदं भवति इति ज्ञातव्यम्।

अत एवाद्वैतमतप्रवर्तकशङ्कराचार्यस्य शिवावतारत्वादिकल्पनं दार्शनिकान्तराणां दैत्यत्वादिवर्णनं च मा. मञ्जर्यादिषु कृतं तद्दर्शनविरुद्धमिति केवलं माध्वद्वेषमूलमेव।

श्रीमन्मध्वमते तु जगतः सत्यत्वात् विष्णोः सर्वोत्तमत्वात् मुख्यप्राणस्य जगद्गुरुत्वात्, जीवेषु त्रैविध्यात् सज्जीवानामेव मुक्तियोग्यत्वात्, दुर्जीवानां निन्द्यत्वात्, हरिवायुद्वेषिदुर्जीवनिन्दनस्य मोक्षसाधनत्वात् हरिगुरुभक्तसज्जीवप्रशंसनस्य तत्तद्देवतास्वरूपावतारादिज्ञानस्य च मोक्षसाधनत्वात् मध्वाचार्यादीनां देवतास्वरूपनिश्चयः आवश्यकः। तथा शङ्करप्रभृतीनां दार्शनिकान्तराणां दैत्यस्वरूपनिश्चयश्चावश्यकः। तस्माद्वेदशास्त्रादिप्रमाणानुसारेण दार्शनिकाचार्याणां विषये देवदैत्यस्वरूपविचारस्यारम्भणीयत्वं मध्वमत एव युज्यते। परमते च तत्तदाचार्यस्य देवतात्वज्ञानं वा पराचार्यस्य दैत्यत्वज्ञानं वा तत्तद्रीत्या न मोक्षादिपुरुषार्थहेतुरिति अद्वैतादिमते देवदैत्यस्वरूपविचारः अनारम्भणीय एवेति दिक्॥

तदेवं पूर्वप्रदर्शितप्रमाणगणैः शिवादिदेवगणसेवितमुख्यप्राणावतारः श्रीमन्मध्वाचार्यः श्रीहर्युपासनमुख्याधिष्ठानमिति सूचकेन "श्रीमदानन्दतीर्थार्यवल्लभमिति" विशेषणेन, द्वैतसिद्धान्तप्रतिष्ठापकाचार्य श्रीमन्मध्वाचार्यशिष्यप्रवरः शिवोऽपि वैष्णवाग्रेसरः द्वैताचार्य एव भवति, न तु द्वैतविरोध्यद्वैताचार्यः सङ्करस्वरूपः इत्यपि मणिमञ्जर्या सूचितम्।

तथा हि। अद्वैतमतप्रवर्तकः सङ्करो न शिवावतारः। प्रमाणाभावात्। किन्तु

मणिमन्नामक दैत्य एव प्रमाणसद्भावात् ।

ननु कथमत्र प्रमाणाभावः । शङ्कराचार्यस्य शिवावतारत्वे यजुर्वेदे चतुर्थाष्टके "नमः कपर्दिने च । व्युप्तकेशाय च नमः" इत्यत्र पाशुपतादिरूपेण कपर्दित्वं यतिवेषेण मुण्डितकेशत्वरूपव्युप्तकेशत्वमुक्तमिति चेन्न अत्र अद्वैतमतप्रवर्तक-शङ्कराचार्यस्य शिवावतारत्वबोधकपदाभावात् । मुण्डितकेशत्वस्य च परमहंसरूपे दूर्वाससि रुद्रावतारे सम्भवात् । दूर्वासरूपस्य च श्रीहरिवायुभक्तत्वं भागवतादिप्रमाणसिद्धमिति तस्यैवेतद्वेदप्रतिपाद्यत्वं योग्यम् ।

अत्र मा. मञ्जरीकारेण श्रुत्यर्थोपबृंहणायोदाहृतस्कान्दीयवचनेऽपि

"कल्यब्धौ मज्जमानांस्तान् दृष्ट्वानुक्रोशतोऽम्बिके ।
ममांशभूतं देवेशि कलावपि तपोधनम् ॥
केरलेषु तदा विप्रं जनयामि महेश्वरि ।
भविष्यति महादेवि शङ्कराख्योऽथमस्करी ॥"

इत्यादौ च श्रुत्युक्ते व्युप्तकेशपदार्थः शङ्कराचार्य इत्यस्य बोधकपदस्याभावात् । वीरभद्रसृष्टिकाले केशोत्पाटनरूपव्युप्ततायाः ग्रहणसम्भवात् विद्यारण्योक्तार्थस्यैव मुण्डितकेशतारूपतारूपस्य ग्राह्यतायां नियामकाभावश्च ।

किञ्च

"अतथ्यानि वितथ्यानि दर्शयस्व महाभुज! ।
प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु ॥

इत्यादिरूपभगवदाज्ञापालकस्य श्रीमहारुद्रदेवस्य मोहकवाक्यमेतदित्यप्रमाणाभूतस्य त्वदुक्तस्कान्दीयवचनस्य श्रुत्यर्थोपबृंहणरूपत्वमेव नास्ति ।

एतेन मा. मञ्जर्यां "उपह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् । श्रेष्ठं सवं सविता सा विषन्नो भीद्धो धर्मस्तदुषु प्रवोचमिति" ऋग्वेदवाक्यमादाय

अद्वैतविद्याया उपनिषद्विद्यापरत्वेन सुहस्तादिशब्दस्य शङ्करनामनिर्देशादिपरतया च अर्थवर्णनं यत्कृतं तदपि परास्तम्। पूर्वं तत्वमस्यादि वाक्यार्थविचारसन्दर्भे एवैतस्य निराकृतत्वेनाद्वैतविद्याया उपनिषद्विद्यात्वाभावात्। सर्वत्र विष्णुपारम्यपरमहाभारत - भागवतादि प्रमाणानुसारेण वेदार्थनिर्णायकब्रह्मसूत्रानुसारेण च वेदार्थस्य निर्णेयत्वादस्यापि वेदवाक्यस्य विष्णुसर्वोत्तमत्वपरत्वस्यैव युक्तत्वात्। सुहस्त-शब्दस्य सुखप्रदहस्तत्वार्थमवलम्ब्य ''ऐश्वर्यमीश्वरादिच्छेत्'' इति मानानुसारेण कथञ्चिदमुख्यवृत्त्या पार्वतीपतिशङ्करपरत्वसम्भवेऽपि अप्रामाणिकाद्वैतबोधक-शङ्कराचार्यपरत्वे नियामकाभावाच्च। सवितृशब्दस्य जगत्सर्जनकर्त्रर्थकस्य विष्णावेव योज्यत्वात् ''तत्सवितुर्वरेण्यमिति'' गायत्रीसमाख्यानाच्च वेदशास्त्रपुराणेति-हासरूपगोधोग्धृत्वलिङ्गाच्च श्रीवेदव्यासाख्यो विष्णुरेवात्र श्रुतौ मुख्यप्रतिपाद्यः।

ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु।
ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः॥

इत्यादिरूपं प्रमाणं विष्णुपरत्वं संवादयति। तर्काभयेतहस्तत्वमेव सुहस्तत्वमिति वेदव्यासरूपस्यैवैतल्लिङ्गम्।

उक्तवेदवाक्यव्याख्यानत्वेनोदाहृतानि विष्णुधर्मोत्तरवायुपुराणादिवाक्यान्यपि शङ्करशब्दघटितत्वमात्रेण नाद्वैताचार्यग्रहणे ज्ञापकानि भवन्ति।

एवमेव सर्वेषां वेदशास्त्राणां श्रीविष्णुसर्वोत्तमत्वादिपरताया पूर्वं निर्णीतत्वात् तदनुसारिपुराणेष्वत एव प्रमाणभूतेषु भारतभागवतपाञ्चरात्रादिष्वद्वैताचार्यशङ्करस्य शिवावतारत्वं क्वापि नोक्तमिति, तद्विरुद्धपुराणादिवचनानामप्रामाण्यान्मोहनार्थं प्रवृत्तत्वाच्च शिवपुराणसौरलिङ्गपुराणवचनोदाहरणपूर्वकं मा. मञ्जर्या शङ्कराचार्यस्य शिवावतारत्वकीर्तनमद्वैतस्य वैदिकत्वकथनं तिर्यग्त्रिपुण्ड्रधारणादेर्ग्राह्यत्वप्रतिपादनं लिङ्गपूजनादेर्मुक्तिसाधनत्ववर्णनमेवमादीनि सर्वाण्यपि निर्मूलानीति सर्वथा त्यज्यान्येव।

एतन्मध्ये काश्मीरदेशस्थसर्वज्ञपीठसमारोहण - चतुर्दिक्षुमठस्थापन-प्रभृतिविषयबोधकानि च वाक्यानि स्वकपोलकल्पितानीति सुस्पष्टं भासन्ते ! त्रियुगहूतेर्विष्णोः कलौ पद्मपादत्वेनावतारकल्पनं, कृतत्रेताद्वापरेष्वनवतीर्णस्याव-ताररहितस्य चतुर्मुखब्रह्मणः कलियुगे विश्वरूपाचार्यरूपेणावतीर्णत्वकल्पनं तथा ह्यवताररहितायाः सरस्वत्याः शापतः कलौ भूमौ जातत्वकल्पनमित्यादीनि वेद-शास्त्रसिद्ध श्रीविष्णुब्रह्मादिस्वरूपमाहात्म्यविरुद्धत्वादप्रामाणिकानीति मन्तव्यम्।

किञ्च माध्वैर्विद्वद्भिः श्रीमध्वाचार्याणामवतारकालमारभ्यैव श्रीमध्वाचार्याणां मुख्यप्राणावतारविषये शतशो वेदशास्त्रपुराणेतिहासवाक्यानि सुस्पष्टं समुदाहृतानि तत्तद्ग्रन्थेषु समुपलभ्यन्ते। तादृशवेदादिवाक्यानां मध्वार्यपरतानिराकरणं च तत्कालीनैरद्वैतिप्रभृतिविद्वद्भिर्न क्वापि कृतम्। अतो अबाधितोऽयं मध्वस्य वेदसिद्धमुख्यप्रणावतारत्ववादः।

राजन्ते चाद्यापि जागरूकाणि श्रीमत्त्रिविक्रमपण्डिताचार्यप्रभृति-विद्वद्वरेण्यवाक्यानि

तत्वज्ञान्मुक्तिभाजः सुखयसि हि गुरोयोग्यतातारतम्या-
दाधत्से मिश्रबुद्धीन् त्रिदिवनिरयभूगोचरान्नित्यबद्धान्।
तामिस्रान्धाधिकाख्ये तमसि सुबहुलं दुःखयस्यन्यथाज्ञान्
विष्णोराज्ञाभिरित्थं श्रुतिशतमितिहासादि चाकर्णयामः ॥

इत्यादिरूपाणि सल्लोके। एवं शङ्कराचार्यकालमारभ्य तस्य शिवावतारत्वे वेदवाक्यसमुदाहरणक्रमस्तदानीन्तनविद्वत्परम्परायां क्वापि ग्रन्थेषु नोपलभ्यते। अद्वैतमतीयविद्वदग्रगण्यैर्विद्यारण्याप्पय्यदीक्षितप्रभृतिभिरपि शङ्कराचार्यस्य शिवाव-तारत्वादिविषये वेदवाक्यसमुदाहरणसाहसो नैव कृतः। अनेनेदं स्पष्टं ज्ञायते। अद्वैतमतीयपरम्परायां शङ्कराचार्यस्य शिवावतारत्ववादो वेदानारूढ इति।

सत्यप्येवमधुनातनैः कैश्चिदद्वैतिभिः पूर्वापरज्ञानहीनैः श्रीमध्वार्याणां

वैदिकत्वमसहमानैः शाङ्करविषयेऽपि कथं कथंमपि यत्किञ्चिद्वेदवाक्यं प्रर्शनीयमिति दुराग्रहदूषितमनस्कैः परिगृहीतोऽयं वेदोदाहरणपूर्वकमपार्थकरणप्रकारः माध्व-विद्वेषमूलकः जगद्वञ्चनात्मक एवेति विमर्शकाः सुधियो विभावयन्त्येव।

तस्मान्नेदं समुदाहृतं वेदवाक्यद्वयं शाङ्करवैदिकत्वे मानम्। तथा च वेदामूलत्वात् तदुदाहृतपुराणादिवाक्यानामप्रामाण्यं तत्पूर्वाचार्यापरिगृहीतत्वात्स्व-कपोलकल्पितत्वं चावश्यं विज्ञेयम्। एवमेव सङ्करस्य देवत्वविषये मा. मञ्जरीकारेणोदाहृतानां मृतोत्थितानां लगुडोपाख्यानशिवरहस्यादिरूपाणां वाक्यानां पुनः पुनः खण्डनं मृतमारणन्यायमनुसरतीति न विशेषतो तन्निरसने प्रयतितव्यम्।

दर्शनस्य दुष्टत्वं तद्दर्शनप्रवर्तकस्य दुराग्रहिणः स्वरूपतो दैत्यत्वं व्यवस्थापयतीति पूर्वमुक्तम्। अद्वैतर्शनस्याप्रामाणिकत्वप्रमाणविरुद्धत्वरूपं दुष्टत्वं तत्वमस्यादिवाक्यार्थपर्यालोचनेन पूर्वं बहुधोपपादितम्। अद्वैतर्शनदौष्ट्येनैव सामान्यतो ज्ञातदैत्यस्वरूपस्य तत्प्रवर्तकशङ्कराचार्यस्य प्रमाणविशेषैर्मणि-मन्नामकक्रोधवशदैत्यस्वरूपत्वं निश्चितं भवति। तानि प्रमाणान्यधुना प्रदर्शयिष्यामः:-

स्कान्दपुराणे

मणिमत्पूर्वका दुष्टा दैत्या आसन् कलौ युगे।
ते कुशास्त्रं प्रकुर्वन्तो हरिवायुविरोधिनः॥
तेषां मध्ये सङ्करस्तु पूर्वं यो मणिमान् खलः।
सौगन्धिकवने दिव्ये भीमसेनहतोऽसुरः॥
स क्रोधतन्त्रको दुष्टो मिथ्याशास्त्रं वदन् पुनः।
कृष्णे भीमे च विद्वेषं कुर्वन् भूमावजायत॥
कालडिग्रामके रुद्रवराल्लोकान् विमोहयन्॥

अत्र स्पष्टं कालडिग्रामजातस्याद्वैतिसङ्करस्य मणिमन्नामकदैत्यस्वरूपत्वं तथा

दुर्दार्शनिकानां सर्वेषां सामान्यतो दैत्यस्वरूपत्वं च प्रतिपादितम्। श्रीकृष्णभीम-सेनद्वेषयुक्तत्वमेव तामसत्वज्ञापकम्।

पद्मपुराणे च :-

रुद्र उवाच :-

> श्रुणु देवि ! प्रवक्ष्यामि तामसानि यथा क्रमात्।
> येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि॥
> प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम्।
> मच्छक्त्या वेशितैर्विप्रैः सम्प्रोक्तानि ततः परम्॥
> कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत्।
> गौतमेन तथा न्यायं साङ्ख्यं तत्कपिलेन वै॥
> धिषणेन तथा प्रोक्तं चार्वाकमतिगूहितम्।
> दैत्यानां नाशनार्थाय हरिणा बुद्धरूपिणा॥
> बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम्।
> मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते।
> मयैव कथितं देवि ! कलौ ब्राह्मणरूपिणा॥
> मणिमान्निहतः पूर्वं भीमेन शुभबुद्धिना।
> सञ्जातो ब्राह्मणकुले तपसा मां प्रसाद्य वै॥
> मिथ्यावादमसच्छास्त्रं चकार स तु संकरः।
> शास्त्राणीमानि गिरिजे तामसानि निबोधमे॥

अत्र तामसशास्त्रवर्णनपरिगणनप्रस्तावे परिकीर्तितस्य मायावाद-शास्त्रस्याच्छास्त्रत्वं तन्निर्मापकस्य सङ्करस्य च मणिमन्नामकदैत्यस्वरूपत्वं तपसा परितोषितेशत्वेन च रुद्रशक्त्यैव तस्य वाग्मित्वमेवमादिसर्वं प्रमापितं भवति। अत एवाहुर्नारायणपण्डिताचार्या सुमध्वविजये :-

यो भूरिवैरो मणिमान् मृतः प्राक्
वाग्मी बुभूषुः परितोषितेशः।
स सङ्कराख्योऽङ्घ्रितलेषु जज्ञे
स्पृधा परेप्यासुरिहासुरेन्द्राः ॥ इति ॥

नन्वत्र पाशुपतबौद्धादिदर्शनानां दुष्टत्वेऽपि तत्प्रवर्तकशिवविष्ण्वादेर्दुष्टत्वं न सिद्धमिति नेयं युक्तिरव्यभिचारिणीति चेन्न स्वस्वरूपत्वस्ववञ्चकत्वैतदन्यतरसम्बन्धेन दैत्यविशिष्टत्वरूपस्य दुष्टत्वस्याव्यभिचारात्। सङ्करादावुक्तप्रमाणबलाद्दैत्यस्वरूपत्वे पर्यवसानस्य हरिहरादौ च दैत्यजनवञ्चकत्वमात्रे पर्यवसानस्य चेष्टत्वात्। दैत्यवञ्चनादिकं भगवतः स्वतन्त्रस्य निर्दोषस्य श्रीहरेः तदाज्ञया च प्रवृत्तस्य हरादेश्च न दूषणं भवतीति पूर्वमुपपादितम्।

न चैतानि पुराणवाक्यान्याधुनिकपुरुषकल्पितानीति शङ्क्यम्। प्राचीनविज्ञानभिक्षुप्रणीतयोगवार्तिकादौ चोपलम्भात्। पूर्वोक्तयुक्त्यानुगृहीतत्वाच्च मान्यान्येव तानि वाक्यानि। एवं रौप्यपीठपुरमाहात्म्य श्रीमुष्णमहात्म्यादावपि सङ्कराचार्यस्य दैत्यस्वरूपत्वप्रतिपादकवाक्यानि बहुलमुपलभ्यन्ते। तस्माच्छङ्कराचार्यस्य शिवावतारत्वे वेदरूपप्रमाणाभावादत एव वेदानुसारिपुराणाभावाच्च मा. मञ्जरीकारोदाहृतवाक्यानां च वेदानानुगुण्येनाग्राह्यत्वाद्दैत्यस्वरूपत्वे वेदानुगुणपुराणप्रमाणसद्भावात् भगवद्गीताद्युक्तदैत्यलक्षणसद्भावाच्चाद्वैताचार्यः सङ्करो न शिवावतारः। किन्तु मणिमन्नामकदैत्य एवेति सिद्धम्।

ननु मध्वाचार्यस्यापि मुख्यप्राणस्वरूपत्वे प्रमाणं नास्ति ? मधुनामकदैत्यस्वरूपत्वे च बहुलानि पुराणवाक्यानि सन्तीति कथं देवत्वनिर्णय इति चेन्न भगवान् श्रीमुख्यप्राणः श्रीहर्याज्ञया सुजनतत्वावबोधनाय हनुमद्भीममध्वाचार्यात्मनाऽवततारेत्यत्र वेदवाक्यानां तथा तदनुगुणपुराणवाक्यानां पूर्वमुदाहृतत्वेन प्रमाणाभावशङ्काया अवकाशो नास्ति। अत एव दैत्यस्वरूपत्व

बोधकवाक्यानां वेदविरुद्धत्वेन प्रमाण्याभावादेव दुर्बलतद्विरोधोऽपि न मध्वाचार्याणां देवस्वरूपत्वे बाधक इति सामान्यतो मन्तव्यम्।

अत्र विचारविशेषस्तु। माध्वैः प्रसिद्धप्रमाणानुसारेण शङ्कराचार्यादेर्दैत्यस्वरूपत्वं वर्णितम्। श्रीमन्मध्वसिद्धान्ते श्रुत्यादिसिद्धजीवत्रैविध्याङ्गीकारेण सुरासुरस्वरूपवर्णनस्य युक्तत्वमावश्यकत्वं च पूर्वमुपपादितम्। एतदसहमानैः मध्वाचार्यस्य दैत्यस्वरूपवर्णनप्रयत्नशीलैर्मायिभिः प्रथमतो जीवत्रैविध्य मङ्गीकर्तव्यम्। स्वमतोल्लङ्घनं च कार्यमिति प्रथमो महान्मुखभङ्गः। किञ्च मध्वाचार्यस्य दैत्यस्वरूपत्वं यदुच्यते तद्दैत्यसामान्यलक्षणाभावादेवायुक्तम्। तथाहि। भगवद्गीतायां दैवासुरसम्पद्विभागयोगे भगवता श्रीकृष्णेनासुरलक्षणमुक्तं :-

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे श्रुणु॥

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम्॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः॥

अत्र "आसुरा जगत् असत्यमित्याहुः। असत्यं नाम सत्यपदवाच्यविष्णुहीनमाहुः। स्थितिहेतुतया प्रतिष्ठापदोक्तविष्णुहीनमाहुः। अनीश्वरं स्वामिहीनमाहुः। अपरस्परसम्भूतं = "अन्नाद्भवन्ति भूतानी"त्युक्तदिशा परस्परसम्भूतं न भवतीत्याहुः। तथा जगत् = सत्यं न, मिथ्या इत्याहुः। शुक्तिरूप्यवन्न प्रतितिष्ठतीत्यप्रतिष्ठं ज्ञानबाध्यमित्याहुः। किं तर्हि अन्यत् = सदसद्भ्यां विलक्षणं

(सदसद्विलक्षणं) आहुः। कामहैतुकम् = कामहेत्वविद्यापरिणामरूपमित्याहुः। एतां दृष्टिमाश्रित्य नष्टात्मानो दुष्ठचित्ता अल्पज्ञाना घोरकर्मनिरता जगतोऽहिता शत्रवः क्षयाय अनिष्टप्राप्तये कलियुगादौ प्रभवन्ति'' इति **श्रीराघवेन्द्रतीर्थैः कृतोऽर्थः।**

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः।
मामात्मपरेहेषु प्रद्विषन्तोऽभ्यसूयकाः।

अभ्यसूयकाः निर्दोषे मयि कृष्णे दोषान् वदन्तः, गुणपूर्णे मयि गुणहीनतां वदन्तः

तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्॥

मूढाः = तामसस्वभावा। जन्मनि जन्मनि = अनेकजन्मसु। असुरीं योनिमापन्नाः = **व्यभिचारादिजातशरीरसम्पन्नाः**। अधमां = नित्यनरकलक्षणं तमो यान्तीति। अत्र जगन्मिथ्यात्ववादित्वं, जगन्नियामकाभाववादित्वं, दुष्पूर-कामाश्रितत्वं, दम्भमानमदान्वितत्वमप्रामाणिकाद्वैतादिग्रहगृहीतत्वं श्रीकृष्ण-प्रद्वेषित्वमेवमादीनि दैत्यलक्षणान्युक्तानि। एतेषु न किञ्चिल्लक्षणं मध्वाचार्ये दृश्यते। एतत्सर्वं सङ्कराचार्ये तथा तदीयेषु विद्यारण्याप्पय्यदीक्षितप्रभृतिषु च दरीदृश्यते। जगदध्यासवादेन वेदादिजगन्मिथ्यात्ववादित्वं, परमार्थिकाद्वैतवादेन जगन्नियामक-कृष्णाभाववादित्वं, परकायप्रवेशनमूलकं स्वेच्छानुसारेण परनारी-सम्भोगादिना दुष्पूरकामाश्रितत्वं, भस्मरुद्राक्षधारणादिशैवाचारविचारपरत्वेन च श्रीकृष्णप्रद्वेषित्व-मवैष्णवत्वमेवमन्यान्यपि दैत्यलक्षणानि सङ्कराचार्ये तदनुयायिषु च समन्वितानि भवन्ति।

वेदशास्त्रादिसकलजगतः पारमार्थिकसत्यत्वविष्णुसर्वोत्तमत्व - पञ्चभेदतारतम्यादिवादिनि, निर्दुष्टचरितान्विते, गोपीचन्दनोर्ध्वपुण्ड्रचक्रशङ्खादिवैष्णवलाञ्छन धारिणि श्रीविष्णुप्रीतिकराचारविचारभरिते, श्रीकृष्णैकान्तभक्ते, अद्वैतादिदुर्मतध्वान्तभास्करे श्रीमन्मध्वाचार्ये तथा तदीयशिष्यपरम्परावर्गे च पूर्वोक्तं न किञ्चिद्दैत्यलक्षणमस्तीति कथं दैत्यत्वमुच्यते ?। त्वया कथितं च कथं प्रेक्षावद्भिर्मानितं स्यात् ?। हे मूढ ! माणिक्यमञ्जरीकार ! कथय !॥ तत्र गीतायामेवोक्तं देवलक्षणम् :-

अभयं सत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तपआर्जवम् .........।
भवन्ति सम्पदं दैवीमभिजातस्य भारत॥ इति॥

ज्ञानयोगव्यसस्थितिः = ज्ञानोपायनिष्ठता। ज्ञानोपायश्च तत्र गीतायामेवोक्तः

"मयि चानन्ययोगेन भक्तिरव्यभिचारिणी"त्यादिः। अस्यार्थस्तु अनन्ययोगेन = रमाब्राह्माादिस्वातन्त्र्यासम्बन्धेन तदविषयणीति यावत्। अत एवाव्यभिचारिणी। मयि = अत्र अस्मच्छब्दार्थे श्रीकृष्णे भक्तिरिति अर्थः श्री राघवेन्द्रतीर्थैरुक्तः॥

एतत्सर्वं देवलक्षणं श्रीमन्मध्वाचार्ये परिदृश्यत इति सामान्यतः सिद्धं सुरत्वं, पूर्वोक्तप्रमाणानुसारेण जीवोत्तममुख्यप्राणस्वरूपत्वे पर्यवस्यति।

एतेन कल्पितवाक्यानि प्रदर्श्य क्रोधमूकमधुनामकदैत्यसम्बन्धं प्रकल्प्य तप्तमुद्राङ्कनोर्ध्वपुण्ड्रादीनां श्रुतिसिद्धानां निन्द्यत्वं विलिख्य पाशुपतादितामसमार्गानुसरणस्य महत्वमुपपाद्य मध्वाचार्यस्य दैत्यत्वव्यवस्थापनप्रयत्नो मा. मञ्जरीकारीयोऽपहस्तितो वेदितव्यः। पूर्वोक्तवेदशास्त्रगीतादिविरोधात्। तप्तमुद्राङ्कनादेर्वेदवैदिकमानसिद्धत्वात्। तिर्यग्त्रिपुण्ड्रभस्मरुद्राक्षमालाधारणादेरवैदिकत्वात्। तिर्यग्त्रिपुण्ड्रादिधारकानामासुरत्वस्य वेदशास्त्रविरोधित्वेनावश्य-

कत्वाच्च। तिर्यग्पुण्ड्रधारणादिप्रशंसस्य च तामसपुराणादौ पठितस्यासुर-जनमोहनार्थाय प्रवृत्तत्वेनाग्राह्यतायाः पूर्वं बहुधोपपादितत्वात्। शाङ्करीयाचरणं सर्वमासुरलक्षणमेव।

ऊर्ध्वपुण्ड्रशङ्खचक्रादिविष्णुलाञ्छन तुलसीमालागन्धाक्षतादिधारणैकादश्या-दिसद्वैष्णवव्रतानुष्ठानादिरूपस्य माध्वीयाचरणादेर्वैदिकस्य श्रीहरिगुरुभक्ति-ज्ञानादिप्रवर्धकस्य सात्विकचेतन देवर्ष्यादिसल्लक्षणत्वात्सर्वदा ग्राह्यतैव। तत्र वेद-वैदिकप्रमाणानि उदाहरिष्यामः।

इदमेकमत्र विशेषप्रमाणं प्रस्तूयते :-

भो! रघुनाथसूरे! माणिक्यमञ्जरीकार। एतावत्कालपर्यन्तं त्वत्पूर्वाचार्यैस्तथा त्वया च तथा शालिवाहन शकीय १९१४ तमीय चित्रभानुसंवत्सर माघशुद्ध-मध्वनवमीतिथ्यात्मक मदीयैतत्कृतिप्रकाशनकालपर्यन्तं जीवितैस्त्वदीयैस्स्मार्तै-रद्वैतिभिःत्वदीयपुराणवाक्यादीव कल्पयित्वाप्यप्रदर्शितं, अस्मत्कृतप्रदर्शनमवलोक्य भविष्यति काले त्वदीयैः कथञ्चित्कल्पयिष्यमाणं अत एव त्वदीयानां जगद्वञ्चकत्वख्यापकमेकं प्रमाणं प्रस्तूयते।

तच्च प्रमाणं, सङ्करस्य तथा तदीय दुराग्रहिशिष्यवर्गस्य च दैत्यस्वरूप-विषयेऽस्मत्पूर्वजैः श्रीविजयीन्द्रतीर्थस्वामिपादैः प्रदर्शितं नवीनमध्वाध्व-कण्टकोद्धारनिर्मात्रा श्रीमता नागराजशर्मणा च प्रकाशितम्। तेन प्रमाणेन श्रीमन्मध्वाचार्याणां देवस्वरूपत्वं त्वदीयशङ्कराचार्यस्य दैत्यस्वरूपत्वं सुस्पष्टं निर्विवादं च सिद्ध्यति। परस्परविद्वेषमूलकपुराणवाक्यपरिकल्पनादिना अद्वैतिजनेषु माध्वजनेषु च परस्परं दैत्यत्वरूपेण निन्दनादिकं प्रवृत्तमिति कथञ्चिल्लौकिकेषु विभ्रमः स्यान्नाम। परन्तु मध्वनिन्दकानां पुनरावृत्तिरहितनित्यनिरयगामित्व-निश्चायकं विभ्रमानास्पदमबाधितमेतत्प्रबलतमं प्रमाणम्। तथाहि।

''प्रत्यक्षं ज्योतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणा''विति स्पष्टम्। नाडीग्रन्थेषु तावत् तत्र तत्र भविष्यकथनं जागर्ति। तत्र चतुर्मुखनाड्यां देवताप्रकरण इदं दरीदृश्यते :-

''हन्त कालस्य कौटिल्यं कलौ किं किं भविष्यति।
प्राबल्यं सूर्यपुत्रस्य पापमार्गप्रवर्तकम्॥
दौर्बल्यं च गुरोस्तत्र परस्परकृतः कलिः।
नानाविधानि पापानि सन्ति नैव च निष्कृतिः॥
तथाप्येकं महापापं जगदीश्वरचोरता।
अद्वैतं तादृशं चौर्यं करिष्यति कलौ युगे॥
कालटिग्रामसम्भूतः शङ्कराचार्यनामकः।
कथं जातः कथं शिष्टः कथं मुण्डी कथं गुरुः॥
सर्वं तस्य चरित्रं तु भूमौ कश्चित्करिष्यति।
नानाविधाः शनेर्योगाः सन्ति शङ्करजातके॥
जगदीश्वरसत्तादिचोरकर्मणि दीक्षितः।
बुद्धगौडादिकप्रोक्तमद्वैतं तु निरीश्वरम्॥
प्रवर्तयिष्यति कलौ तदा लोकाः सदाऽऽकुलाः।
ईश्वरैश्वर्यचोरोऽयं यच्छनिश्चौर्यकारकः॥
विष्णुभक्त्यादिसम्पूर्णो द्वैतशास्त्रप्रवर्तकः॥
सर्वोत्तमत्वं श्रीविष्णोः स्थापयिष्यति सर्वशः।
योगिवर्यः स मध्वाख्यो गुरुस्सत्यस्य कारकः॥
गुरोरनुग्रहादेव द्वैतशास्त्रं करिष्यति।
शाङ्करांस्तत्र तत्रायं खण्डयिष्यति युक्तिभिः॥
माध्वनिन्दाप्रवक्तारो दुर्भगा नात्र संशयः।
पारजाताख्ययोगोऽयं लग्नाधिपतिदर्शितः॥

मध्वनिन्दाप्रवक्तारः परजाता न संशयः ।
दिवि वा भुवि वा यत्र कुत्रापि निवसन्तु ते ॥
परजाता रहःपापाः भुवि प्रेत्य निराशिषः ।
निरयं यान्ति शनिना दृष्टास्ते मध्वनिन्दकाः ॥
निरीश्वरं जगत्प्रोक्तमद्वैतब्रह्मवादिभिः ।
अद्वैतचोरान् संहृत्य जगत्तस्मै समर्पितम् ॥
विष्णवे मध्वयतिना तस्माद्विष्णुपदाश्रितः ।
विष्णुस्तुष्टश्च मध्वाय जगत्स्वाम्यसमर्पणात् ॥
कलिकाले शनेर्वीयात् नानादेशेषु दीक्षिताः ।
शास्त्रिणः सम्भविष्यन्ति पुराणानां प्रकल्पकाः ॥
पुराणे कल्पिते कापि मध्वनिन्दा भविष्यति ।
निन्दका निरयं यान्ति यावच्चन्द्रदिवाकरौ ॥
रामाभिषेकविघ्नेन मन्थरा निरये यथा ।
तथा निरयगाः सर्वे मध्वतच्छास्त्रनिन्दकाः ॥
तेषां च जातके नूनं षष्ट्यंशादिबलाबलम् ।
विवेचयेत्तदा तत्र दुर्भगत्वं स्फुटीभवेत् ॥
नानानाडीशास्त्रतत्वनिर्णयेऽत्र चतुर्मुखे ।
सत्यं प्रोक्तं फलं प्रोक्तं पूर्वकर्मार्जितं भुवि ॥ इति ॥

अत्र स्पष्टं नाडीग्रन्थे शङ्करजातकपरिशीलनमुखेन कालटीग्रामसम्भूतस्य शङ्करस्य जगदीश्वरचौर्याख्यमहापापभागित्वं प्रदर्श्य व्यभिचारजातत्वं - अशिष्टत्वं-यत्याभासत्वं - वञ्चकगुरुत्वं - शाक्यशिष्यगौडपादगोविन्दपादप्रोक्ताद्वैतप्रवर्तकत्वं - सल्लोकाकुलकारित्वमित्यादयः शनियोगफलरूपत्वेन समुपवर्णिताः ॥

श्रीमन्मध्वाचार्याणां च ब्राह्मणोत्तमत्वं - विष्णुभक्त्यादिगुणसम्पूर्णत्वं -

द्वैतशास्त्रप्रवर्तकत्वं - श्रीविष्णुसर्वोत्तमत्वस्थापकत्वं - योगिवर्यत्वं - जगद्गुरुवेदव्यासानुग्रहमुख्यपात्रत्वं शाङ्करादिमतखण्डयितृत्वं - सद्युक्तिमय ग्रन्थनिर्मापकत्वमित्यादयो गुरुयोगफलरूपत्वेन प्रतिपादिताः ॥

तथा मध्वनिन्दाप्रवक्तारश्च परजाताः = व्यभिचारजाता एव। नियमेन वर्तन्ते। तेषां नित्यनिरयगामित्वमेव फलम्। एवमादिकं च तेषां दौर्भाग्यं तत्तदद्वैतिवरेण्यजातकेषु षष्ठ्यंशादिनिर्णयबलेन ज्ञायत इति च वर्णितम्।

तेन ज्ञायते, मणिमञ्जरीकारैः श्रीमन्नारायणपण्डिताचार्यैर्मणिमञ्जर्यादौ स्वग्रन्थे सङ्करस्य व्यभिचारजातत्ववैदिकसंस्काररहितत्व - कलुषमुण्डित्व - शिष्ट-निन्दितत्व - प्रच्छन्नबौद्धत्व - प्राज्ञतीर्थादिसद्यतिबाधकत्वादिकं यद्यदुक्तं तत्सर्वमबाधितम्। न किञ्चित्कल्पितमिति।

तथा श्रीमन्मध्वचार्याणां परमोत्कृष्टोत्पत्त्यादिमत्वसुसंस्कृतत्व - शिष्टश्रेष्ठत्व - देवोत्तमत्व - द्वैतशास्त्रप्रवर्तकत्वादिकं यद्यदुक्तं तत्सर्वं परमप्रामाणिकमिति च फलितम्।

तथा श्रीमध्वनिन्दकानां नित्यनिरयगामित्वकथनेन महातामसत्वरूपदैत्यत्वं च निर्णीतं भवतीति विद्यारण्य - अप्पय्यदीक्षित - रघुनाथसूरिप्रभृतयो महादैत्या इति च सिद्धम्।

तथैव श्रीमध्वाचार्यगुणकीर्तनपराः पुण्यात्मनो महाभाग्यशालिनः श्रीहरिगुर्वनुग्रहेण मोक्षभागिनः सात्त्विकचेतनवरेण्या इति च सिद्धं भवति।

तस्मात् विवादहीनेन नाडीग्रन्थप्रमाणेन पूर्वोक्तवेदवैदिकपुराणादिना च प्रसिद्धप्रामाणिकतत्वरत्नाख्यमणिमञ्जरीनिर्मातारः श्रीमन्नारायणपण्डिताचार्याः साधकसुजनानां सन्मार्गे परमोपकारकाः सद्भिः सदा वन्द्या इति सिद्ध्यति।

एतत्सर्वं सूचयता श्रीमदानन्दतीर्थार्यवल्लभमिति विशेषणेन श्रीहरेस्स्तावको श्रीनारायणपण्डिताचार्यो एवं वर्णनीयः

**प्रमेयमेतद्धृदि साधु कृत्वा नारायणार्योऽयमगाधबोधः ॥**
**जगाद मध्वार्यसमीरभावं दैत्यस्वभावं खलसङ्करस्य ॥**

एवं ''उपह्वये सुधुगा''मित्यादिश्रुतिरद्वैताचार्यस्य सङ्करस्य शिवावतारत्वे न प्रमाणमिति सिद्धम् । तथा परोदाहृतपुराणवचनान्यपि न प्रमाणानि ।

ननु शिवपुराणे लगुडेशोपापाख्येने........ ''कलौ शङ्कर ईरितः शिवतेजः सुतः साक्षाच्छङ्करः परदैवतम्''

भविष्यत्पुराणे :-

चतुर्भिसह शिष्यैस्तु शङ्करोऽवतरिष्यति ।
गुरुरद्वैतविद्याया उपदेष्टा शिवस्ततः ॥

स्कान्दे शिवरहस्ये च :-

अद्वैतमेव सूत्राणां प्रमाणेन करिष्यति ।
अविमुक्ते समासीनं व्यासं वाक्यैर्विजित्य च ॥
शङ्करस्स्तौति हृष्टात्मा शङ्कराख्योऽथ मस्करी ।

स्कान्दवाक्ये च :-

काञ्च्यां तपःसिद्धिमवाप्य दण्डी चण्डीशरूपो जगदाकलय्य ।
ब्रह्मैक्यविद्यां रचयन् स भाष्यं शारीरकं नाम जगाद मोदात् ॥

व्यासेन सम्भाष्य समेत्य काशीं तं मण्डलार्यं परिखण्ड्यावार्णी ।
जेतुं शरीरान्तरमेत्य कामकलां जगाहे प्रमादावरां यः ॥

पुनः स्वकं देहमवाप्य तूर्णं पूर्णं निजं काममथाकलय्य ।
वाणीं स जित्वैव तु तां मठे स्व श्रीशृङ्गगिर्याख्यपुरे निवेश्य ॥......

इत्यादौ शङ्कराचार्यस्य शिवावतारत्वं प्रसिद्धमिति चेत् । न । उदाहृतवचनानां

प्रामाण्याभावात्। एतेषां प्रामाण्याभावश्च शङ्कराचार्यस्य दैत्यस्वरूपत्वबोधकानां पूर्वोदाहृतानां नैकेषां पुराणवचनानां विरोधेन सिद्ध्यति। न च वैपरीत्यं किं न स्यादिति वाच्यम्। श्री विष्णुसर्वोत्तमत्वादिसत्तत्वपरवेदानुसारित्वेन शाङ्करा-सुरत्वबोधकपुराणवाक्यानां प्रामाण्यनिर्धारणात्। तद्विरोधेन शाङ्करीयशिवाव-तारत्वपरवाक्यानामप्रामाण्यनिर्धारणस्य सुलभत्वात्।

किञ्च मा. मञ्जरीकारोदाहृतवाक्येषु व्याहत्यादिदोषसद्भावाच्चाप्रामण्यं सिद्ध्यति। तथा हि। ''शङ्करः परदैवत''मिति क्वचिच्छिवस्य सर्वोत्तमत्वं वक्ति। तच्च द्वैताङ्गीकारे एवोपपद्यते। क्वचिद्वक्ति गुरुरद्वैतविद्याया उपदेष्टा इति। एतच्च द्वैताभावाङ्गीकारे एवोपपद्यते। तथा च तदुदाहृतवाक्यानां कथं न व्याधातः। व्यावहारिकद्वैतावलम्बनेन व्याहतिपरिहारस्तु शङ्करस्य परदेवतात्वबोधकवाक्या-प्रामाण्यसम्पादक इति शिवावतारत्वाद्यसिद्धिः। अतत्वमेव हि व्यावहारिकत्वम्।

किञ्च क्वचित् ''द्वापरे व्यासनामा तु कलौ शङ्करनामधृक्'' इति व्यासं स्तौति॥ ''तथा तत्रैव व्यासं वाक्यैर्विजित्य च'' इति व्यासं निन्दति। ततश्च कथं न व्याहतिः। सङ्करस्य शिवावतारत्वेन स्वतः सार्वज्ञं क्वचिद्वक्ति। तत्रैव वाणीं जेतुं शरीरान्तरमेत्य कामकलां जगाह इति कामकलाऽनभिज्ञत्वं कथयतीति स्पष्टो व्याघातः। एवं ''वाणीं विजित्य तां'' इति वाण्याः पराजयं कथयित्वा ''स्थापयित्वा सुपूजय'' इति पराजितायाः स्वशिष्यभूतायाः शृङ्गगिरौ प्रतिष्ठापनपूजनादिकं तद्भर्तुः चतुर्मुखावतारत्वेन स्वीकृतस्य विश्वरूपस्य अपूजनादिकं च कथयति। एतत्सर्वमनुपपन्नभाषितत्वस्य प्रयोजकम्।

किञ्च शिवस्य स्वपत्नीभूतया पार्वतीदेव्या सह सहस्राधिकवर्षपर्यन्तं रतिकेलिविहारः सुप्रसिद्धः। तदानीमनधिगतायाः कामकलाया अधिगमः शङ्कराचार्यावतारदशायां परकायप्रवेशपूर्वकं विधवाभूतपरनारीसम्भोगादिना सम्प्राप्त इति वर्णनमत्यन्तानुपपन्नभाषणमेव। एतादृशमत्यन्तजुगुप्सितं हेयं सङ्करचरितं

सङ्करमहिमात्वेन वर्णयतां शांङ्कराणां कथं लज्जा न जायते? । अहो मोढ्यमहो दुष्टस्वभावः ।

तस्मान्मा. मञ्जरीकरोदाहृतवाक्यानां अकामेनाप्यनुपपन्नभाषितत्वमप्रामाण्यं चाङ्गीकर्तव्यमिति न तैर्वाक्यैरद्वैताचार्यसङ्करस्य पार्वतीपतिशिवावतारत्वसिद्धिः । किन्तु पूर्वोदाहृतपुराणादिप्रबलप्रमाणबलात् मणिमन्नामकक्रोधवशदैत्यावतारत्व-मेवाङ्गीकर्तव्यम् । तथा श्रीमणिमञ्जरीकारोक्तदिशा सङ्करस्य मण्डनमिश्रपत्नी-कामनया, तत्पतिवञ्चनमार्गेण जारत्वमेवाङ्गीकार्यम् । तां च दुष्टां स्त्रियं शारदात्वेन प्रकल्प्य तत्प्रतिमाप्रतिष्ठापनपूजनादिकं व्यवस्थाप्य दुर्बुद्धिप्रवरैः प्रवर्तितं जार-जारणीमहोत्सवं श्लाघयन् मा. मञ्जरीकारः श्लाघनीयप्रज्ञ एव ॥

अत एवोक्तं माध्वस्तुतावस्मदीयायां :-

**''क्वैष श्रीशङ्करो नः श्रुतिगणगणितः शिष्टसद्वैष्णवाग्र्यः**
**क्वासौ दुष्टाग्रणीर्दुर्मतिहतकुनरैराद्दतस्सङ्करस्ते ।**
**दुष्टैवातः प्रतिज्ञा त्वदुचितकुगुरुः सङ्करः शङ्करश्चेत्यत्रा-**
**मानस्तुतौ यद् हतमतिबल ! तेऽहो बलं पण्डितेन्द्र!''** ॥ इति ॥

तथा तत्रैव :-

**''दूर्वासा द्रोणपुत्रः शुकमुनिरथवा दक्षिणामूर्तिरीशो**
**विष्णोः सर्वोत्तमत्वं शुभनिजचरितैस्स्थापयन् भेदतत्वम् ।**
**मध्वार्योक्तं सुभक्त्या रघुपयदुपसत्किङ्करः शङ्करोऽतः**
**वेदद्वेष्यैक्यवादी कथमिह वद ते सङ्करः शङ्करः स्यात् ॥''** इति ॥

एतेन ''आद्ये सत्यमुनि.........द्वापरनामके तु सुमतिर्व्यासः कलौ शङ्करः'' इत्यादिरूपा माधर्वीयाद्युक्तिरपि प्रत्युक्ता वेदितव्या ।

एवं वेदशास्त्रसत्पुराणादिषु प्रथितं श्रीमुख्यप्राणावतार श्रीमन्मध्वा-

चार्यमाहात्म्यं तथा दैत्यावतारसङ्करदौर्जन्यं च सम्यक् समालोच्यैव सुजनानुजिघृक्षया मणिमञ्जरीनाम्नीं सत्कृतिं निर्ममे श्रीमन्नारायणपण्डिताचार्यः। एतदसहमानो माणिक्यमञ्जरीकारः स्वसहजसिद्धं सासूयतादिकं श्रीनारायणपण्डिताचार्ये समध्यस्य यदुन्मत्तप्रलपनं कृतवान् तस्य चोत्तरमेवं विभावनीयं सुधीभिः :-

**माध्वाग्र्यरुद्रामलभक्तिभाजो नारायणार्यस्य परोदिता या।**
**शिवान्यदुःसङ्करशैववादे सासूयता सा सुजनोचितैव॥**

एवं मध्वनिन्दापरतयोदाहृतानि पुराणवाक्यान्यप्यप्रमाणानि। तथा हि। केदारखण्डादिनामनिर्देशपूर्वकं प्रथमतः कथितेषु पुराणवाक्येषु ''कलिः कामक्रोधादीन् स्वभृत्यान् दैत्यान् समादिश्याद्वैतमतविरोधीनि विष्णुपाषण्डादीनि मतानि भूमौ प्रवर्तयामास। तत्र क्रोध एव मध्वयतिर्भूत्वा तत्ववादाख्यं द्वैतमतं जगौ'' इत्यादि यदुक्तं तत्सर्वमयुक्तमिति विमर्शनेनावगम्यते। तथाहि।

कलिस्तावन्महादैत्यः। तद्भृत्याश्च क्रोधादिनामकाः दैत्या इति परस्यापि सम्मतम्। दैत्यलक्षणं तु दृढहरिद्वेषादिस्वरूपत्वं - जगन्मिथ्यात्ववादित्वं - शिवपारम्याग्रहः - अहं ब्रह्मास्मिवादित्वमित्यादिकम्। तदुक्तं भगवद्गीता-दावुभयसम्मते प्रमाणे।

''न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।
माययापहृतज्ञाना आसुरं भावमाश्रिताः॥''

''भूतानि यान्ति भूतेज्या.....''अवजानन्ति मां मूढाः..........''
''असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम्........॥
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः।''

''तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥''
''मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥'' इति ॥

दृष्टं च महाभारते – कलिस्वरूपे दुर्योधने तथा तद्भृत्येषु च श्रीकृष्ण-भीमसेनादिषु प्रद्वेषस्वरूपत्वम् । तथा कंसजरासन्धादिदैत्यवर्गे च श्रीकृष्णभीम-सेनद्वेषशिवपरम्याद्याग्रहादिकं च दैत्यलक्षणम् । तथा च दैत्यश्रेष्ठकल्याज्ञयाऽवतीर्णः क्रोधनामक असुर एव यदि मध्वः स्यात्तदा श्रीहरिगुरुद्वेषोद्बोधकमतमेव प्रवर्तयेत । न तु श्रीहरिगुरुभक्त्याद्यभिवर्धकं मतम् । त्वदुक्तरीत्या च क्रोधेन श्रीहरिगुरुप्रद्वेषमतं न प्रवर्तितम् । किन्त्वद्वैतमतविरुद्धं श्री हरिभक्त्यादिप्रवर्धकं द्वैतमतमेव प्रवर्तितम् । तथा च प्रमाणसिद्धदैत्यस्वभावविरुद्धं माध्वमतं कथं कलिप्रवर्तितं स्यात् । एतन्मतप्रवर्तकोमध्वः कथंतरां दैत्यःस्यात् । महादैत्यः कलिः कथन्तमामेतन्मतप्रवर्तने स्वभृत्यं दैत्यं समाज्ञापयेत् । तस्मान्मा. मञ्जरीकारोक्तमेतत्सर्वमनुपपन्नभाषण-मयमित्युपेक्षणीयं सद्भिः ॥

किञ्च भगवद्गीतोक्तप्रकारेणाद्वैतमतमेवासुरं मतम् । तत्प्रवर्तकस्तत्समर्थन-कामुकाश्च सर्वे ह्यसुराः । एतद्बोधकपुराणवाक्यानि प्रमाणानीति तन्मूला मणिमञ्जरी प्रमाणतमेत्यवधेयम् । तथा दैत्ययोनौ जातस्यापि प्रह्लादादेः श्री हरिगुरुभक्त्यादिना देवतात्वमेव परिदृष्टम् । श्रीहरिभक्ताग्रेसरस्य श्रीमध्वाचार्यस्य सुतरां देवतात्व-निश्चयः, पूर्वोक्तप्रमाणबलेन च जीवोत्तममुख्यप्राणावतारत्वनिश्चयश्च भवतीति किमु वक्तव्यम् । तद्विरोधिनः परोदीरितवाक्यजातस्याप्रामाण्यं सर्वैः प्राज्ञैर्निश्चेयम् ।

एतेन मा. मञ्जर्यां पराशरसंहितोदाहरणपूर्वकं मूकनामकदैत्य एव मधुनाम वहन् कर्नाटदेशे द्वैतमार्गानुसारेण व्याससूत्राणि व्याख्यास्यतीत्यादिजल्पनमपि प्रत्युक्तं वेदितव्यम् । पूर्वं कलिभृत्यक्रोधावतारत्ववर्णनस्यात्र तु मूकनामक-दैत्यावतारत्ववर्णनस्य चानुपपन्नभाषितत्वात् । क्रोध एव मूक इत्यत्र प्रमाणाभावात् ।

एवमेव प्रतर्दनोपाख्यानप्रदर्शनपूर्वकं वैष्णवधर्मस्य निन्दनं शैवधर्मस्य स्तवनं मध्वाचार्येण निन्दितवैष्णवधर्मप्रवर्तनमित्यादिकं यत्कथितं तत्सर्वं बालजनमनोहर-जल्पनप्रपञ्चनात्मकमेव। वैष्णवधर्मश्रैष्ट्यस्य उभयवादिसिद्धप्रामाण्यकवेदभारत-भागवतभगवद्गीतादिप्रमाणसिद्धत्वेन वैष्णवधर्मनिन्दनं शैवधमश्रैष्ठ्यं चानुपपन्नमेव। किञ्च क्वचिदद्वैतागमबोद्धारमित्यद्वैततत्वे परिनिष्ठा। "क्वचित्स्वामी मदीय-श्रीकण्ठः" इत्यादौ शिवपारम्यबोधनेन द्वैततत्वे परिनिष्ठेत्याद्यनुपपन्न-भाषणपूरितत्वेन कल्पितकथाकन्थायितमिदं सर्वमिति विमर्शकमतेर्नातिदूरम्।

तत्रैव रतिदेवीविलापप्रकरणमुखेन यदुक्तं "वसन्त एव मधुनामा भुवि जातो मध्वाचार्य इति प्रसिद्धः सन् स्वस्वामिकामदेवहन्तकशिवद्वेषेण वैष्णवमतं माध्वमतं प्रसारितवानित्यादि" तत्सर्वं पूर्वोक्तप्रमाणविरुद्धत्वादप्रामाणिकम्। किञ्च वसन्तः खलु देवतास्वरूपः। त्वद्रीत्या तदवतारश्चेन्मध्वस्तस्य पूर्वं त्वदुक्तदैत्यावतारत्ववर्णनविरोधः। "वसन्तो मधुनामा विधवागर्भे जाराद्भविष्यति स एव मध्व" इत्यादि यदुक्तं तदप्यतीवमन्दम्। तथा हि। पूर्वोक्तरीत्या श्रीहरिभक्तिविष्णुसर्वोत्तमत्वज्ञानवैष्णवदीक्षादिरूपदेवलक्षणान्वितस्य श्रीमध्वाचार्यस्य दैत्यलक्षणाभावात्। प्रमाणविशेषेण देवोत्तममुख्यप्राणत्वसिद्ध्या च, देवानां च जारजातत्वादेः क्वाप्यभावात्, सत्कुलप्रसूतोत्तमब्राह्मणदम्पती-जातत्वमेव सिद्ध्यतीति श्रीमध्वविजयाद्युक्तरीत्या श्रीमन्मध्यगेहार्यदम्पती-जातत्वादिकं सर्वं सूपपन्नं भवति। अत एव मद्यगेहेत्यादि प्रकल्प्य श्रीमन्मध्वाचार्यसच्चारित्रस्य विकृतवर्णनादिकं केवलं श्रीमध्वप्रद्वेषमूलमेवेति शाङ्कराणां दैत्यस्वभावः प्रकटितः। किञ्च दैत्यानां व्यभिचारजातत्वस्य सहजत्वात्पूर्वोक्तदैत्यलक्षणान्वितस्य सङ्कराचार्यादेर्जारजातकंसादेरिव व्यभिचार-जातत्वमेव सिद्ध्यतीति, पूर्वोदाहृतज्योतिश्शास्त्रं च सङ्करादेः परजातत्व-मेवोपपादयतीति तत्प्रतिपादकमणिमञ्जरी साधकसर्वसुजनोपकारिणी विभाति।

श्रीहरिवायुद्वेषयुक्तेन कलिना दैत्यसभायां दैत्यस्वभावानुगुणाद्वैतवाद - जगन्मिथ्यात्ववाद - वेदातत्वावेदकत्ववादादिप्रतिपादनद्वारा श्रीकृष्णभीमसेन-द्रौपदीद्रोहाचरणाय मणिमन्नामकदैत्ययोजनं तस्य च दैत्यस्य कालटीग्रामे सङ्करूपेण जाराद्विधवायां जननमत्यन्तहेयमायामतप्रवर्तनं श्रीव्यासद्रोहाचरणं सुजनहिंसनादिकं सर्वं पूर्वोदाहृतप्रमाणोक्तदैत्यस्वाभाव चरितमिति मणिमञ्जर्यां न किञ्चित्कल्पितमस्ति ।

एतदवसरे यदुक्तं, पद्मपादुक - मध्वाचार्य - समागमपूर्वकं मध्वनिन्दनादिकं तच्च शङ्करशिष्यपद्मपादुकग्रहणे रावण - कृष्णसमागमादिकमिव देशकाल-विपर्यासादिदोषग्रस्तमितीतीहासकालाभिज्ञाः लौकिका अपि जनन्त्येवेति तन्निरसने नाधिकं यतितव्यम्। अन्यस्य पद्मपादुकस्य प्रमाणदूरत्वात् तत्समागमादिकमपि प्रमाणदूरतरमिति सुधियां नातिदूरम्। सङ्करसन्यासविषये मणिमञ्जर्यामुक्तमसहमानेन मा. मञ्जरीकारेण कृतं श्रीमध्वनिन्दानादिकं निर्मूलमिति सुस्पष्टं ज्ञायते। सङ्करसन्यासादिकं च श्रीकृष्णप्रद्वेषमूलमिति मणिमञ्जर्युक्तं सर्वं समूलम्। अत एवास्मत्कृतौ माध्वस्तुतावेवमुक्तं :-

प्रद्वेषी श्रीशकृष्णे युधिहतधिषणो भीमसेनेऽतिरोषी
दोषी वाग्मी बुभूषुर्गततनुषु तपस्तोषितोमापतीशः ।
भाषावेषेण मुष्णन्नबुधजनमनीषादिमायी बकेशः
कृष्णं शून्यीचिकीर्षुः श्रुतिजलधिझषं हंसवेषो बभूव ।। इति ।।

किञ्च मध्वनिन्दनावसरे तत्र तत्र :-

''श्रुतिस्मृतिपुराणानि भञ्जयिष्यति दुर्मतिः ।
स्वयं करिष्यते धीरः पुराणानि श्रुतीः स्मृतीः ।।

इत्यादि वाक्यप्रदर्शनव्याजेनाप्रसिद्धश्रुतिस्मृतिकल्पनपूर्वकं स्वमतस्थापनं सर्वत्रदूषणमिति'' स्वाभिप्रायं प्रकटीचकार मा. मञ्जरीकारः। अत्र किञ्चिद्विचार्य-

ताम्। श्रीमन्मध्वाचार्यैः शतशः सर्ववादिप्रसिद्धानां श्रुतिस्मृतीतिहासादिवाक्यानां समुदाहरणपूर्वकं द्वैतसिद्धान्तस्थापनमद्वैतादिदर्शननिराकरणं च कृतमित्येतत्तदीय-भाष्यादिग्रन्थावलोकनेन ज्ञायते। सति चैवमसार्वजनीनानां श्रुतिस्मृतिवाक्यानां समुदाहरणं च श्रीमन्मध्वाचार्याणामनन्तवेदशाखाद्यभिज्ञत्वस्य संस्फोरकमेव भवति। न तु परवाद्युक्तरीत्याऽप्रसिद्धश्रुतिकल्पकत्वदूषणापादकम्। अत एव श्रीमन्मध्वाचार्याणां समीपकालीनो सकलवेदव्याख्यानचणो विद्यारण्योऽपि स्वीयसर्वदर्शनसंग्रहादौ नैतद्दूषणं समुदाजहार। अनेनैतज्ज्ञायते तत्कालीनेषु वेदविद्याविशारदेषु प्रचलितशाखातिरिक्तवेदशाखाद्युदाहरणपद्धतिः प्रसिद्धशाखा-समाख्यादिना वेदशाखात्वनिर्णयपद्धतिश्च दृढनिरूढाऽऽसीदिति। तत एव शाङ्कर - रामानुजभाष्यादावप्यप्रसिद्धानां पैङ्गीश्रुत्यादीनां समुदाहरणं न केनाप्याक्षिप्तम्। ततःपञ्चषेभ्यो वर्षशतेभ्यः पश्चाद्वेदशाखास्वरूपनिर्णायकयुक्त्यादिपरिशीलन प्रेक्षा-विशेषशून्येषु जनेषु विपुलेषु सत्सु दुराग्रहातिशयेनाप्पय्यदीक्षितप्रभृतिभिर्दुवादिभिः श्रुतिस्मृतिकल्पितत्ववादः समारब्ध इति तत्पुच्छावलम्बिना मा. मञ्जरीकारेणापि तदनुगुणश्लोकादिकं श्रुत्यादिकल्पनदूषणपरं निर्मितमिति यत्किञ्चिदेतत्। नैताव-ताऽद्वैतदर्शनस्य प्रामाणिकत्वं सिद्ध्यति। प्रसिद्धश्रुतिस्मृत्यादिविरोधेन प्रसिद्ध-प्रमाणाभावेन चाद्वैतस्य निराकरणपद्धतिः प्रातःस्मरणीयैः श्रीमत्सत्यध्यानतीर्थ-श्रीमच्चरणैः स्वग्रन्थेषु निपुणतरं प्रदर्शिता तत्रैव द्रष्टव्या।

किञ्च श्रीमध्वाचार्याणां श्रुतिस्मृतिप्रसिद्धस्य गोपीचन्दनोर्ध्वपुण्ड्र धारणतप्त-मुद्रांकनादिरूपस्य बाह्याभ्यन्तरदीक्षास्वरूपस्य श्रीमद्वैष्णवमार्गस्य प्रवर्तकत्वाच्च देवत्वसिद्धिः।

यदत्र गोपीचन्दनोर्ध्वपुण्ड्रतप्तमुद्राधारणादिनिन्दनं कृतं तदप्ययुक्तम्। तप्तमुद्रादिधारणस्य श्रुतिस्मृतिसिद्धत्वात्। "पवित्रं ते विततं ब्रह्मणस्पते" "चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि। तेन पवित्रेण शुद्धेन पुनाति पाप्मान

मरातिं तरेम'' तथा शतपथश्रुतिः - ''स होवाच याज्ञवल्क्यः। तस्मादात्महिताय हरिं भजेत्। सुश्लोकमौलर्वर्मण्यग्निना सन्दधातीति'' वैष्णवचिन्हानां चक्रादीनां धारणं विधत्ते। तदनुसारिस्मृतिवाक्यानि च शतशः संत्यस्मिन् विषये। तथाहि :- विष्णुरहस्ये वैष्णवदीक्षाप्रकरणे -

दीक्षा हि द्विविधा प्रोक्ता, बाह्याभ्यन्तरभेदतः।
ज्ञानिनामुभयं तत्र बाह्योवाऽज्ञानिनां भवेत्।
अयं सर्वेष्टदातामे सर्वारिष्टनिवारकः
सर्वोत्कृष्टोऽयमेवैकः तदीयोऽहं स मे पतिः।
इति ज्ञानं निश्चितं यत् सा दीक्षाऽभ्यन्तरा मता।
नामचिह्नादिना देहे वह्निना वा मृदाङ्कनम्।
सा बाह्या प्रोच्यते दीक्षा ह्यज्ञानां ज्ञानिनामपि। इति ॥

तथोर्ध्वपुण्ड्रविषये

ऊर्ध्वपुण्ड्रमृजुं सौम्यं ललाटे यस्य दृश्यते।
स चण्डालोऽपि शुद्धात्मा पूज्य एव न संशयः।
अशुचिर्वाप्यनाचारो, मनसा पापमाचरेत्।
शुचिरेव भवेन्नित्यमूर्ध्वपुण्ड्राङ्कितो नरः।
ऊर्ध्वपुण्ड्रविहीनस्य स्मशानसदृशं मुखम्।
अवलोक्य मुखं तेषामादित्यमवलोकयेत्।
यज्ञो दानं तपो होमः स्वाध्यायः पितृतर्पणम्।
व्यर्थं भवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम्।
गोपीचन्दनलिप्ताङ्गो यं यं पश्यति चक्षुषा।
तं तं शुद्धं विजानीयात् नात्र कार्या विचारणा ॥ इति ॥

चक्राद्यङ्कनविषये संप्रदायश्च प्रदर्शितः

विप्रो वा यदि वा क्षत्रो वैश्यः शूद्रस्तथैव च।
अन्ये संकरजातीयाः चक्राङ्का मम वल्लभ।
शंखचक्राङ्कनं कुर्यादात्मनः भुजमूलयोः।
कलत्रापत्यभृत्येषु पश्वादीनां च मुक्तये।
प्रह्लादेन तथा मुद्रा धृता नारायणी करे।
विभीषणेन रुद्रेण ब्रह्मणा त्वथ पाणिना।
मान्धात्रा चाम्बरीषेण मार्काण्डेयादिभिर्द्विजैः।
अङ्कितं शङ्खचक्राभ्यामुभयोर्बाहुमूलयोः। इति ॥

फलं चोक्तं ब्रह्माण्डपुराणे

यत्फलं पृथिवीदाने कुरुक्षेत्रे रविग्रहे।
कृष्णायुधाङ्कितो देही तत्फलं समवाप्नुयात्। इति।

तथा पद्मपुराणे

मातुर्वंशं पितुर्वंशं भार्याया श्च कुलं तथा।
पुनाति सप्तपर्यंतं विष्णोश्चक्राङ्कितः पुमान्। इति।

आदित्यपुराणे च

चक्रादिधारयेद्विप्रः ललाटे मस्तके भुजे।
पातकादिविशुद्ध्यर्थं भवरोगविशांतये। इति ॥

ऊर्ध्वपुण्ड्रचक्राङ्कनादिधारणाभावे दोषश्चोक्तः।

तथा वृद्धमनुः -

उपवीतं शिखाबन्धमूर्ध्वपुण्ड्रं सुशोभनम्।
चक्रलाञ्छनहीनस्य विप्रस्य विफलं भवेत्।

पराशरः -

शङ्खचक्रोर्ध्वपुण्ड्रादिरहितो ब्राह्मणाधमः ।
सजीवन्नेव चण्डालः सर्वकर्मबहिष्कृतः ।

आत्रेयः-

अधृत्वा वैष्णवं चक्रं यत्कर्म क्रियते जनैः ।
तत्सर्वं राक्षसानीतमिष्टापूर्तं द्विजोत्तम ।

तथा वसिष्ठसंहितायां-

तथैव चक्रहीनस्य पूजनाद्वन्दनादपि ।
वैष्णवो नरकं याति यावत्कल्पशतत्रयम् ।
अवैष्णवत्वं विप्राणामब्रह्मण्यमिति स्मृतम् ।

तथा पद्मपुराणे -

उच्चवर्णोऽपि यो विप्रो वेदवेदाङ्गपारगः.।
सदाचाररतोऽपि स्याद्विष्णुदीक्षाविवर्जितः ।
स चोरवद्बहिष्कार्यः तस्मै दत्तं च निष्फलम् । इति ।

तथा तत्रैव नित्यविधित्वं चोक्तम्

अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा ।
ब्राह्मणस्य तथा विद्यात्तप्तमुद्राधिकारिता ॥

तप्तमुद्राङ्कधारिणः निन्दनेऽनर्थश्चोक्तः ब्रह्मवैवर्ते ।

तप्तचक्रधरं दृष्ट्वा यो वै निन्दति मूढधीः ।
स याति नरकं घोरं यावदाभूतसंप्लवम् । इति ॥

संत्यन्यान्यपि सहस्रशः पुराणवचनानि तथा पञ्चरात्रागमादिवाक्यानि

चास्मिन् विषये। एतत्सर्वसमालोचनेन - साधकसज्जनैः सर्वैः गोपीचन्दन - तप्तमुद्रा - पञ्चमुद्राधारणादिकमवश्यं कर्तव्यमिति सिद्ध्यति।

ननु - एतन्निन्दक पुराणवचनान्यपि संति। तथाहि -

यस्तु संतप्तचक्रादिः लिङ्गचिह्नतनुर्नरः।
..........चण्डालः कोटिजन्मसु।

तथा -

चक्राङ्कित तनुर्यत्र तत्र कोऽपि न संवसेत्।
चक्राङ्कित तनुं दृष्ट्वा पश्येत् सूर्यं जपेन्नरः।
शङ्खचक्रे मृदा यस्तु धारयेत्..........
सशूद्रवद्बहिष्कार्यः...............
नाङ्कनेन दहेद्गात्रं...............

इत्यादीनीति॥ चेत् न। एंतेषां श्रुतिमूलत्वाभावेनाप्रामाण्यस्य वक्तव्यत्वात्। गोपीचन्दनादिधारणबोधकवाक्यानां पूर्वोक्तश्रुतिमूलत्वेन प्रामाण्याव-धारणात् चक्राङ्कधारणादिकं सिद्ध्यति। तथा चक्रादि धारणनिन्दकश्रुतेरभावेन, चक्राद्यधारणनिन्दकश्रुतिसद्भावेन च चक्रादि धारणमत्यावश्यकमिति च सिद्ध्यति।

किञ्च चक्राद्यङ्कनादेर्वैष्णवधर्मत्वात् - तिर्यक्पुण्ड्र भस्मधारणादेरवैष्णव-धर्मत्वात् - अवैष्णवसर्वधर्मपरित्यागपूर्वकं वैष्णवधर्मानुष्ठानस्य भगवता श्रीकृष्णेन भगवद्गीतायां

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वासर्वपापेभ्यः मोक्षयिष्यामि मा शुचः।
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।"

इत्यादिरूपेण बहुधा समर्थितत्वात् चक्राङ्कनादिकं सर्वदा ग्राह्यमेव।

न चैतत्सर्वं तंत्रावलम्बिब्राह्मण - चण्डाल - नट - नर्तकादिविषयं। न तु वेदावलम्बिब्राह्मणादिविषयमिति वाच्यम्। पाञ्चरात्रादौ ब्रह्मरुद्रादिसर्वसाधक-सुजीवाधिकारिकत्वस्य प्रोक्तत्वात्। न च पञ्चरात्र - पाशुपतादीनां निन्दितत्वा-दप्रमाणमेव पाञ्चरात्रागम इति वाच्यम्। पाशुपतसाङ्ख्यादीनामप्रामाण्येऽपि - पाञ्चरात्रागमप्रामाण्यस्य भारते समर्थितत्वात्।

जनमेजयकृतागमादिप्रामाण्यप्रश्नोत्तरावसरे-
"सांख्यं योगः पाशुपतं वेदारण्यकमेव च।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा।.........
पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्।
ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते।"

इत्यादिना पाञ्चरात्रागमप्रामाण्योपपादनपूर्वकं - वेदारण्यकव्याख्यानभूत पाञ्च-रात्रागमप्रामाण्ये सिद्धे - व्याख्येयात्मकवेदप्रामाण्यस्य कैमुत्यन्यायमवलम्ब्य वैशंपायनमुनिना समर्थितत्वात्। पञ्चरात्रागमस्यैव सात्वततन्त्रत्वात् सत्वत-शब्दस्यापार्थं परिकल्प्य निन्दनं चायुक्तम्। तस्मात् पाञ्चरात्रागमनिन्दनं तु लिङ्गपुराणादौ दैत्यजनव्यामोहनार्थमेवेति सात्त्विकैस्सर्वसाधकैः श्रुतिस्मृति-पुराणपञ्चरात्राद्युक्तरीत्या गोपीचन्दनोर्ध्वपुण्ड्रतप्तमुद्राधारणादिरूपा बाह्यसद्वैष्णव-दीक्षाऽप्यवश्यमनुष्ठेया। राजसैः तामसैश्च जीवैः पाशुपतसाङ्ख्य - योग - वैखानसागमादिमतानुसारेण - लिङ्गधारण - तिर्यक्पुण्ड्रधारण - त्रिपुण्ड्रधारणादि रूपा बाह्यदीक्षानुष्ठीयते इत्येव व्यवस्था।

संप्रदायश्च तथैव वर्तते। देवर्षिसद्वैष्णवद्विजादौ वेणुपत्राकृत्यूर्ध्वपुण्ड्रादि-धारणसंप्रदायः प्रसिद्धः। हिरण्यकशिपु - रावण - जरासन्ध बाणाद्यसुरेषु च तिर्यक्पुण्ड्रलिङ्गधारणाद्यासुरसम्प्रदायः पुराणादिप्रमाणसिद्धः।

ततः गोपीचन्दनोर्ध्वपुण्ड्रचक्रादिमुद्राधारणनिन्दनपूर्वकं तिर्यक् भस्म-

पुण्ड्रादिधारणदीक्षाभरिताः स्मार्ताः संकराचार्यपूर्वकाः सर्वे दैत्या वा तदंशावेशम्भरा वा इति सिद्धम्। अधिकं तु श्रीमत्सत्यध्यानतीर्थश्रीमच्चरणविरचिते तप्तमुद्राङ्कन-विचारात्मके ग्रन्थे द्रष्टव्यम्।

एवं परस्परं वैष्णवावैष्णवधर्मयोः स्तुतिनिन्दापरेषु पुराणादिवाक्येषु प्रामाण्याप्रामाण्यावधारकाः बलबलतया निर्णीताः सद्युक्तीरलभमानेन अत एवानल्पमूढेन दुराग्रहिणा माणिक्यमञ्जरीकारेण श्रीमन्नारायणपण्डिताचार्य निन्दनादिपर्यवसानात्मकं पद्यं यदुक्तम् - ''प्रमाणहीनं मणिमञ्जरीतिग्रन्थं व्यधात्सोऽयमनल्पमूढः। मध्वस्तुति श्रीगुरुशंकरार्यनिन्दावहं पामरलोकतुष्ट्यै ॥'' इति तदेवं परिवर्तनीयम्।

**''प्रमाणपुञ्जं मणिमञ्जरीतिग्रन्थं व्यधात्सोऽयमनल्पबोधः।**
**श्रीमध्वसंवर्णनसांकरीयनिन्दावहं साधकलोकतुष्ट्यै ॥ इति ॥**

पूर्वं श्रीमध्वभक्तग्रेसरः श्रीनारायणपण्डिताचार्योऽप्रामाणिके सङ्करप्राशस्त्ये सामर्षो जात इत्युक्तम्। इदानीं सङ्करनिन्दावहं सप्रमाणं ग्रन्थमपि चकारेत्युच्यते। परमपूज्यो श्रीनारायणपण्डिताचार्यः सत्पुराणादिभ्यः तथा तत्तत्स्थलीय-सल्लोकवार्तादिभ्यश्च सङ्कराचार्यदौष्ट्यं मणिमन्नामक क्रोधवशदैत्यस्वरूपत्वं च विज्ञाय, एवं श्रुतिस्मृतिपुराणेभ्यः शिष्टजनेभ्यश्च श्रीमध्वाचार्यप्राशस्त्यं च विज्ञाय वास्तवविषयावबोधकं मोक्षप्रदं मणिमञ्जरीति ग्रन्थं चकार। स्वोक्तार्थे सर्वस्मिन् बलाबलतया निर्णीतसद्युक्तिपरिपुष्टश्रुत्यादि प्रमाणसद्भावात् प्रमाणपुञ्जमित्युक्तम्। एतादृशप्रमाणप्रमेयपरिशोधनं तथा बहुसख्याकाद्वैतिजनहृदयभेदनकरैतादृश-क्रान्तिकारकबोधनं च नाल्पमतिना शक्यमिति अनल्पबोध एव सः श्रीनारायणार्यः। सर्वांशे प्रमाणमूलत्वावलोकनेन साधकसुजनानां सन्तोषोत्पत्तिः नीचदुर्जनानां च द्वेषासूयादिसमुत्पत्तिरवान्तरफलम्। श्रीहरिगुरुप्रसादद्वारा मुक्तिः परमफलम् ॥

एतादृशपुण्यतममणिमञ्जरीग्रन्थनिन्दनाभासस्यैतल्लेखनस्यानिराकरणं महानिरयकारणमिति दुष्टमाणिक्यमञ्जरीनिराकरणप्रयत्नोऽस्मत्कृतः सार्थकः ।

अत्र यदुक्तं परेण "यस्याश्च लेखनं श्वारावमनुकुर्वतः परिपाटीमनुकुरुते च । न हि परेणोन्मत्तकप्रलपितमित्यस्माभिरपि तथा कर्तव्यमित्यादि" तत्सर्वं स्वमतिदौर्बल्यप्रदर्शकं हताशापरिपूरितं वचः । श्वरावोन्मत्तप्रलापायिततदीयैतल्लेखनेन च स्वव्याहतं च ।

पूर्वोदाहृतबहुप्रमाणारूढा सद्युक्तियुक्ता चेयं मणिमञ्जरी कथञ्चिदपि न खण्डनार्हेति मत्वैव परवादिना मा. मञ्जरीकारेण पुराणादिषु प्रसक्तानि स्तुति-निन्दापराणि सर्ववाक्यान्यनादाय परिगृहीतवाक्येष्वपि बलाबलत्वादिकमविमृष्य च केवलं स्वकपोलकल्पितवाक्येन मदिरासेवनोन्मत्तवाक्यराशिरयं ग्रन्थो निर्मितः । प्रेक्षावतां सुजनानां मोदनाय तद्दौष्ट्यावबोधनाय चास्माभिः किञ्चिल्लिखितम् । साङ्करीयदैत्यस्वभावाख्यपरमरहस्यस्य तथा श्रीमध्वाचार्याणां मुख्यप्राणदेवता-स्वरूपाख्यपरमरहस्यस्य च परिज्ञापनेन श्रीहरिगुरुपरमप्रसादसम्पादनद्वारा महापुरुषार्थसाधनमिदं लेखनं महापातकपरिहारकं च ।

अत्र परवादिना स्वीयग्रन्थसमारम्भस्य भवितव्यसाफल्याभाव - गुरुनिन्दाश्रवणजनितमहापातकोत्पादकत्वे समाशंक्य सुसभ्यताप्रदर्शनाय यदुक्तं "न वयं परेषां निन्दनाय प्रवृत्ताः । किन्तु पुराणानां विसंवादे प्रसक्ते तदैककण्ठ्यप्रतिपादनाय । येनास्मान् परकर्मकनिन्दा संस्पृशेत् इत्यादि "तदेतन्मोच्चैर्वोचः परोऽपि श्रोष्यति" इति न्यायमनुसरति । साङ्करोत्पत्यादिविषये विसंवादपरिहारपूर्वकं साङ्करीयजारजत्व - दैत्यस्वरूपत्वादिप्रामाणिकविषय-प्रतिपादनाय मणिमञ्जरीं चकार श्रीनारायणपण्डिताचार्य इति कुतोऽत्र वैयर्थ्याशङ्का? । परमप्रामाणिकद्वैतसिद्धान्तप्रवर्तकश्रीमध्वाचार्ये देवोत्तमसमीराव-तारत्वज्ञापनस्यैव परमदुष्टाद्वैतमतप्रवर्तकसङ्करे च महादैत्यत्वज्ञापनस्याप्या

वश्यकत्वाच्च। अद्वैतमतप्रवर्तकस्य सङ्कराचार्यस्य दैत्यत्वावबोधकपुराणादि-वाक्येष्वनुपपन्नभाषितत्वाद्यभावाद्दैत्यत्वप्रतीतिरबाधिता। परन्तु द्वैतमतप्रवर्तक-श्रीमध्वाचार्यस्य दैत्यत्वावबोधकपुराणवाक्येष्वनुपपन्नभाषितत्वस्य विद्यमानत्वात्तत्र दैत्यत्वप्रतीतिर्बाधिता।

अत्र यदुक्तं ''पुराणेषु तत्संस्पर्शकवचनसत्वान्मध्वमधिकृत्य पुराणानि प्रवृत्तानि इति निश्चेतुं शक्यते। तथाहि। सौरपुराणे कालधर्मनिरूपणावसरे ''ततः कलियुगे प्राप्ते..........मधुनामा तु विधवा क्षेत्रे जाराद्भविष्यति। गोलकः स तु पापिष्ठः पद्मपादुकमीश्वरम्। अद्वैतवादनिरतं गुरुत्वेनार्चयिष्यति। शास्त्रं पूर्णं ततोऽधीत्य स्थित आह्निकवर्जित'' इत्यादि।

तत्तुच्छम्। पूर्वोक्तरीत्या अद्वैतवादिनः पद्मपादुकस्य मध्वाचार्यस्य च विभिन्नदेशकालत्वेनैतयोः गुरुशिष्यभावबोधकस्य पुराणवाक्यस्यानुपपन्नभाषितत्वेना-प्रामाण्यनिर्णयात्। किञ्च गोलकत्वेन पापिष्ठत्वेन च भवत्कल्पितस्य मधुनाम्नो वर्णगोत्रमातापित्रादिकमविचार्य पद्मपादुककृतपूर्णशास्त्राध्यापनवर्णनं सम्पूर्णा-ध्ययनानन्तरं विधवाजातत्वादिनिर्णयसम्पादनवर्णनं चेश्वरत्वेनाङ्गीकृतपद्मपादुक-विषयेऽनुपपन्नमेवेति सर्वमेतत्पुराणवाक्यमग्राह्यमेव।

न च वञ्चनात्तदपरिज्ञानेनाध्यापनादिकं कृतमिति वाच्यम्। ईश्वरत्वेन पद्मपादुकस्य दैत्यस्वरूपपरिज्ञानस्य भाव्यत्वात्। तदेव हि ईश्वरत्वं नाम। यदवलोकनमात्रतः तत्स्वरूपादिपरिज्ञानसामर्थ्यम्। दृष्टं च तादृशसामर्थ्यं श्री हंसनामकपरमात्मप्रवर्तितपरमहंसपरम्परासम्प्राप्ते दूर्वासमहामुनिप्रमुखशिष्ये परतीर्था-भिधे यतिवर्ये। वर्णितमेतन्मणिमञ्जर्याम्।

''दूर्वाससः परं शिष्यं परतीर्थाभिधं यतिम्।
चातुर्मास्यव्रतधरमपश्यत्कापटो वटुः॥
निस्सूत्रं तं वटुं दृष्ट्वा महादानवलक्षणम्।
विद्वानवाङ्मुखो भूत्वा स आचम्य मठं ययौ॥'' इति॥

तथा तत्रैव

> "सत्यप्रज्ञो वटुं भक्तिवैराग्यादिगुणोज्झितम् ।
> दुष्टं विज्ञाय तत्याज जुगुप्सां परमां गतः ॥" इति च ॥

कपटवटुवेषेण समागतस्य सङ्करस्य महादानवलक्षणं स्वसामर्थ्येन विज्ञाय श्रीपरतीर्थयतिः दैत्यैः सह न सम्भाषणीयमित्यवाङ्मुखो भूत्वा प्रथमदर्शन-जन्यापवित्र्यपरिहाराय पुनराचमनादिकं चरित्वा स्वमठं प्रविष्टवान् । तथा श्रीसत्यप्रज्ञतीर्थोऽपि महायतिर्भक्तिवैराग्यादिगुणविवर्जितं दुष्टं तं सङ्करं विज्ञाय परमां जुगुप्सां गतः तं तत्याज । न तु वञ्चकाय सङ्कराय वेदादिकमध्यापयामास एतदेव हीश्वरत्वं नाम । एतादृशेश्वरत्वगुणविशिष्टत्वेन वर्णितः त्वदीयः पद्मपादुकोऽद्वैता-चार्यो वञ्चकत्वेन मधुनामकदैत्यत्वेन च भवत्कल्पितं मध्वाचार्यमवलोकनमात्रतो दैत्यलक्षणं परिज्ञायावश्यं तं बहिर्निष्कासयेत् । परन्तु तथा ह्यकृत्वाऽध्यापनादिकं कुतः कृतवान् ? । तस्मादेतादृशकुत्सितकथाकल्पनाकन्थायितमेतत्पुराणादिवाक्यं सर्वमनुपपन्नभाषितत्वेन सर्वथा त्याज्यमेव ।

किञ्च सम्पूर्णशास्त्राध्ययनान्तरं पद्मपादुकः कथं तं दैत्यमिति ज्ञातवान् ? स्वीयजारजत्वादिबोधकतद्वाक्यादेवेति चेत्तत्रापि वञ्चकः स वटुर्वञ्चनबुद्ध्या स्वीयपरिशुद्धोत्पत्त्यादिकमेव ब्रूयात् । न तु स्वस्य शापादिसम्पादकं जारजत्वा-दिकम् । तस्मात्कथमेतद्वर्णनमुपपन्नं भवेत् ? । तदीयबाह्याभ्यन्तरवैष्णवदीक्षास्वरूपं विज्ञाय पद्मपादुकः तं दैत्यमिति निश्चितवानित्येतच्च सर्वात्मनाऽनुपपन्नभाषितमेव । वैष्णवदीक्षाया हरिगुरुभक्त्यादिस्वरूपायाः तथा गोपीचन्दनोर्ध्वपुण्ड्रधारणादि-रूपायाश्च देवतादिसात्विकसचेतनस्वरूपनिर्धारकत्वस्य वेदभारतभागवतपाञ्चरात्रा-द्यागमप्रमाणप्रमितत्वात् । तस्मात् मणिमञ्जरीविरुद्धमेतत्किञ्चित्कल्प्यमिति दुराग्रहमात्रेणैव माणिक्यमञ्जरी प्रवृत्तेति स्पष्टम् ।

तथा पूर्वं प्रदर्शितरीत्या जगत्सत्यत्वादेः, वेणुपत्राकृतिपुण्ड्रधारणादेश्च

श्रुतिस्मृतिसद्युक्त्यादिवेद्यत्वेन परमप्रामाणिकत्वात् तस्य हैतुकत्ववर्णनमनुपपन्नभाषणमेव। एवमेतज्जातीयं सर्वमपि परवाद्युदीरितं पुराणवाक्य जातं मध्वाचार्यविषये दैत्यव्यामोहकमित्येव निश्चेयम्। ततः सुमध्वविजयग्रन्थोदितदिव्य-वृत्तान्तस्य श्रीमन्मध्वाचार्यस्य विषये दूषणाय प्रवृत्तानां स्वव्याहत्यादिना स्वत एत मृतानां विद्यारण्यतच्चरणानुयायिनामलं मुहुर्मुहुर्मारणेन।

**पुराणवाक्येषु बलाबलत्वे विचार्य जाता मणिमञ्जरीयम्।**
**सद्भिः सुमान्या ह्यविचारजाता माणिक्यमञ्जर्यखिलैर्विनिन्द्या॥**

किञ्च कचिन्मध्वं क्रोधांशं, कचिन्मूकाभिधदानवांशं कचिन्मधुनामकदैत्यांशं वदन्ति स्कान्द-पराशरसंहिता - सौरवाक्यान्यनुपपन्नभाषणमयानीति कः प्रेक्षवान् न विजानीयात् ?। अत्राह मन्दो मा. मञ्जरीकारः – "अवस्थाविशेषवत्वेन क्रोध - मूक - मधुशब्दाः मध्वपर्याया" इति॥ तत्तुच्छम्॥ क्रोधनामकदैत्य एव मूकरूपतामवाप, स एव मधुरूपतामापेत्यादिकल्पनायां प्रमाणस्याप्रदर्शितत्वात्। स्वकृतसंग्रहश्लोकश्च निर्मूलत्वादुपेक्ष्यः। मन्मथदेवसेवकस्य वसन्तात्मकस्य मधोश्च देवस्वरूपत्वेन दैत्यस्वरूपत्वाभावाच्च। प्रमाणाभावेन तदतिरिक्तदैत्यात्मक-मधुकल्पनाऽयोगाच्च। वसन्तत्वेन त्वयैव कीर्तितत्वाच्च।

किञ्च त्वयैव पूर्वं क्रोधस्य कलिभृत्यत्वेन वर्णितत्वात् तदात्मकमधोः कलिसम्प्राप्तेः सदा विद्यमानत्वान्मन्मथदेवताश्रयणद्वारा स्वस्वामिकलिप्रापणकथनं कथमुपपन्नं स्यात् ?। तथा निर्दुष्टभगवदवतारस्य श्रीपरशुरामस्य समस्तदैत्य-नाशकस्य क्रोधनामकदैत्यावेशवर्णनपरं स्कान्दवचनं च सर्वप्रमाणविरुद्धमनुपपन्नं च। तथा स्वयं दैत्यस्वरूपस्य क्रोधस्य परशुरामेण रक्षस्त्वापादकशापप्रदानकथनं युक्तिविरुद्धम्। कथञ्चिद्रक्षस्त्वप्राप्तावपि स एव मूकदानव इत्यत्र न किञ्चित्प्रमाणं प्रदर्शितम्। एवमप्रामाणिकां स्वकपोलकल्पितां कथामाश्रित्य किरातार्जुनयोरिति-हाससंयोजनपराः सर्वेऽपि माणिक्यमञ्जरीयश्लोककलापाः उन्मत्तमदिरालापा इति सुधियो विभावयन्तु।

अत्रान्तरेऽद्वैताचार्यस्य सङ्करस्य मणिमन्नामकदैत्यस्वरूपत्वं संवर्णयतः पूर्वं प्रर्शितस्य पुराणादिवाक्यजातस्य विमर्शनमकृत्वा पौनः पुन्येन रुद्रावतारत्वं कथयन् तथा विद्यारण्यस्य निष्प्रमाणं शङ्करावतारत्वं च वर्णयन्नयं माणिक्यमञ्जरीकारः "श्लाघनीयप्रज्ञो देवानां प्रिय" एव।

नैष दोषोऽस्माकम्। श्रीमध्वाचार्यस्य क्रोधादिदैत्यत्वं वर्णयतः पुराणादि जातस्यानुपपन्नभाषितत्वपप्रदर्शनपूर्वकमप्रामाण्यं व्यवस्थाप्य श्रुत्यादिमूलैः सात्विक-पुराणादिवाक्यैर्मुख्यप्राणावतारत्वं संवर्ण्यते।

ननु कथमेतत्पुराणेषु सात्विकत्वादिप्रकल्पनं युक्तं स्यादिति। चेन्न। पाद्मे गारुडे च तथा व्यवस्थापनात्। नथा हि।

"वैष्णवं नारदीयं च तथा भागवतं शुभम्।
गारुडं च तथा पाद्मं वाराहं शुभदर्शने॥
षडेतानि पुराणानि सात्विकानि निबोध मे।
ब्रह्माण्डं ब्रह्मवैवर्तं मार्काण्डेयं तथैव च।
भविष्यं वामनं ब्राह्मं राजसानि निबोध मे।
मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च।
आग्नेयं च षडेतानि तामसानि निबोध मे॥ इति॥

एवमष्टादशपुराणेषु सात्विकराजसतामसविभागः प्रदर्शितः। अत्रापि पूर्वोक्तरीत्या विष्णुसर्वोत्तमत्वप्रतिपादनप्राचुर्यविवक्षया विभागो द्रष्टव्यः।

ननु स्कान्दे मार्काण्डेयलैङ्गादीनां दशानां शैवपुराणानां ब्राह्मणकथा-बोधकत्वयुक्त्या सात्विकत्वं, तथा भागवत - वैष्णव - नारद - गारुडानां चतुर्णां वैष्णव पुराणानां क्षत्रियकथाबोधकत्वेन तामसत्वं, तथा वैश्यसेव्यतया ब्राह्मादीनां राजसत्वं च निरूपितमिति तद्विरोधो भवदीयविभागस्येति चेन्न। स्कान्दोदीरितस्य सात्विकत्वादिव्यवस्थापनक्रमस्य निर्मूलत्वात्। भागवतादिपुराणानां सात्विकत्व-

व्यवस्थापनक्रमस्य च समूलत्वात्। तथा हि। पौरुषेयं पुराणं त्वपौरुषेय-वेदशास्त्रानुगुणमेव प्रमाणं भवति। अन्यथा प्रमाण्यं न भजते। तदुक्तम् :-

ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम्।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम्।
अतोन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत् ॥ इति स्कान्दे ॥

ब्रह्माण्डे च

ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम्।
मूलरामायणं चैव पुराणं चैतदात्मकम् ॥
ये चानुयायिनस्त्वेषां सर्वे ते च सदागमाः।
दुरागमास्तदन्ये ये तैर्न ज्ञेयो जनार्दनः ॥

श्रुतिमूलत्वेन स्मृतेः प्रामाण्यं मीमांसाशास्त्रानुमतं युक्तियुक्तं च। अन्यथा बौद्धादिशास्त्राणामपि प्रामाण्याङ्गीकारप्रसङ्गः। श्रुतयश्च सर्वा विष्णुपरा एव। तथा च श्रुतिः :-

१. नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति।

२. सर्वे वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं त्वेकमेव।
प्रकाशयन्ते न विरोधः कुतश्चिद्वेदेषु सर्वेषु तथेतिहासे ॥ इति च ॥

ब्रह्म च विष्णुरेव। नत्वद्वैतं ब्रह्म। ''अथ कस्मादुच्यते ब्रह्म? बृहन्तो ह्यस्मिन् गुणाः'' इत्यनेन वेदेनैव गुणपूर्णत्वाभिधानपुरःसरं निर्गुणाद्वैतब्रह्मनिषेधात्। गुणपूर्णं च वस्तु विष्णुरेव भवति। तथा च श्रुतिः :-

''विष्णोर्नुकं वीर्याणि प्रवोचं यत्पार्थिवानि विममे रजांसि'' ॥ इति ॥ तथा

''गुणोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यमपि नैवात्रशङ्का'' । इति । वेदैश्च सर्वैरहमेव वेद्य इति भगवद्गीता च । अत्र स्पष्टं भगवान् श्रीकृष्णः स्वस्यैव सर्ववेदप्रतिपाद्यत्वमाह । तेन ज्ञायते 'श्रीविष्णुसर्वोत्तमत्वप्रतिपादन एव सर्ववेदानां महातात्पर्यमिति । एवञ्च विष्णुपाराम्यपराणां भागवतवैष्णवनारदादिपुराणानां श्रुतिमूलत्वेन प्रामाण्यं सात्विकत्वं च सिद्ध्यति । ब्रह्मदेवपराणां राजसत्वं, शिवादिपराणां च तामसत्वमित्येव व्यवस्था युक्ता ।

किञ्चोभयवादिसिद्धप्रामाण्यके च भारत-भागवत-भगवद्गीतादौ ।

एष निष्कण्टकः पन्था यत्र सम्पूज्यते हरिः ।
कुपथं तं विजानीयाद्गोविन्दरहितागमम् ।। इति भारतवाक्यम् ।।

तथा – ''नारायणपरा वेदा नारायणपरा मखाः ।''
''मां विधत्तेऽभिधत्ते मां विकल्पोऽपोह्य इत्यहम् ।
इत्यस्या हृदयं साक्षाद् नान्यो मद्वेद कश्चन ।। इत्यादि भागवतवाक्यम् ।।

एवं – ''वेदैश्च सर्वैरहमेव वेद्य'' इत्यादिगीतावाक्यम्
वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ।। इत्यादि हरिवंशवाक्यम् ।।

सर्ववेदार्थो विष्णुरेवेत्याह । तथाऽवैष्णवपुराणानामवैष्णवमतस्य च कुपथत्वं च व्यवस्थापयति । तदनुरोधेन विष्णुसर्वोत्तमत्वप्रतिपादकानां पुराणानां सात्विकत्वं सिद्ध्यति । तथा पूर्वोक्तरीत्या

''श्रुणुदेवि! प्रवक्ष्यामि तामसानि यथाक्रमम् ।
येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि ।।
मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैवच ।
आग्नेयं च षडेतानि तामसानि निबोध मे ।।

वैष्णवं नारदीयं तु तथा भागवतं शुभम् ।
गारुडं च तथा पाद्मं वाराहं शुभदर्शने ॥
सात्विकानि पुराणानि विज्ञेयानि शुभानि वै ।
ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च ।
भविष्यंवामनं ब्राह्मं राजसानि निबोध मे ॥
सात्विका मोक्षदाः प्रोक्ता राजसाः स्वर्गदाः शुभाः ।
तथैव तामसा देवि! निरयप्राप्तिहेतवः ॥

इत्याद्युक्त्वा

''यानि सत्वपरं विष्णुं वदन्ति परमेश्वरम् ।
तानि सर्वाणि शास्त्राणि सात्विकानि मताति वै ॥''

इत्यनेन विष्णुसर्वोत्तमत्वप्रतिपादकत्वं सात्विकलक्षणं कथितम् । तथा

प्रजापतिं कृशानुं च तथा देवीं सरस्वतीम् ।
परत्वेन वदच्छास्त्रं राजसं परिचक्षते ॥

इति चतुर्मुख - अग्नि - सरस्वतीनां सर्वोत्तमत्वप्रतिपादकत्वं राजसलक्षणमुक्तम् ।

तथा

यच्छास्त्रं लिङ्गपरम्यं परं देवमुमापतिम् ।
तमः प्रवर्तकं वक्ति तत्तामसमुदाहृतम् ॥

इत्यनेन लिङ्गपारम्यबोधकत्वं - शिवसर्वोत्तमत्वप्रतिपादकत्वं च तामसलक्षणमिति स्पष्टं निरूपितम् ।

''सत्वनिष्ठा हि पुरुषा विष्णुमेव यजन्ति ते ।
ब्रह्माणं राजसाः सर्वे तमोनिष्ठास्तु शूलिनम् ॥''

इति तत्तदधिकृताश्च जीवा निरूपिताः। तथा च पुराणे यः विष्णुसर्वोत्तमत्व-प्रतिपाकभागो वर्तते सः सात्विक एवेति कचिन्माध्वग्रन्थे प्रमाणतया तदुदाहरणं संगच्छते। भागवतादावपि अपाततःक्वचिच्छिवसर्वोत्तमत्वादि-प्रतिपादकभागस्ताम-सजनमोहक इति उच्यते। तस्माद्विष्णुभक्ता माध्वाः सात्विकाः। शिवभक्ता-श्चाद्वैत्यादयस्तामसाः। तत्तज्जीवानां तत्तत्फलागुण-साधनानुरोधेन तत्तत्पुराण-प्रवृत्तिरिति सर्वं समञ्जसम्। एतद्विरोधेन परवाद्युदीरितसात्विकादिविभागपर-पुराणवाक्यस्याप्रामाण्यमेव बोद्धव्यम्। न च वैपरीत्यं शङ्क्यम्। विष्णुसर्वोत्त-मत्वप्रतिपाकत्वादिलक्षणान्यालम्ब्य कृतविभागस्योभयवादिसिद्धप्रमाण्यकश्रुति-भारतादिमूलत्वादप्रामाण्यशङ्काया अनवकाशात्। अत एव नानादेशेभ्यः समानीतपुस्तकेष्वेतादृशपुराणवाक्यानामदर्शनात्कल्पितत्वशङ्का च परोदीरित-वचनेष्वपि समानेत्यनुत्थानार्हा॥

किञ्च शिवपारम्यादिपराणां पुराणानां च वेदशास्त्राऽमूलत्वात् पाशुपताद्यागममूलत्वाच्च पाशुपतादीनामिवाप्रामाण्यं न्याय्यम्। तथा तदनुयायिनां तदुक्ताचार-भस्म-लिङ्ग-रुद्राक्षमालादिधारणप्रत्यक्षपशुहिंसकयज्ञयागाद्यनुष्ठान-मांसभक्षणादिमतां च शैवादीनां तथाद्वैतिनां चावैदिकत्वमेव सिद्ध्यति।

श्रुतिशास्त्रमूलस्मृतिपुराणाद्युदीरितसदाचारगोपीचन्दन - तप्तमुद्रा-वेणुपत्रा-कृत्यूर्ध्वपुण्ड्रधारणैकादश्यादिवैष्णवव्रतानुष्ठान - हरिवायुगुरुभक्तितारतम्यभजन-पिष्टपशुयागादिमतां च माध्वानां वैदिकत्वं - मोक्षाधिकारित्वं - सात्विकत्वं च सिद्ध्यतीति बोध्यम्।

न च पुराणसामान्यस्य पूज्यतमत्वात् कथं केषाञ्चन तामसत्वकथनमिति वाच्यम्। पदवर्णादिसर्वशब्दानां श्रीहरौ समन्वयकर्तॄत्तमाधिकारिविवक्षया पुराणसामान्यस्य पूज्यतमत्वेऽपि तदितराधिकारिविवक्षया पूज्यतमत्वाभावात्। पुराणे एव लक्षणमुखेन कथितत्वाच्च। त्वयाऽपि रूपान्तरेणाङ्गीकृतत्वाच्च।

अत्र यदुक्तं परवादिना "किमत्र तामसत्वं? प्रणेतृदोषेण प्रमेयदोषेण आहोस्वित्कल्पदोषेण" इति विकल्पपूर्वं नाद्यः न द्वितीय इत्यादि ॥ तत्तुच्छम् ॥ अष्टादशपुराणानां प्रणेतुः सत्यवतीसुतस्य भगवतः श्रीवेदव्यासस्य साक्षान्नारायणात्मकस्य दोषाभावेऽपि अवान्तरप्रणेतृत्वेन प्रसक्तानां तामसजीवानां वाक्येषु पुराणघटकेषु प्रणेतृदोषप्रयुक्ततामसत्वस्योपपन्नत्वात्। पुराणानां सर्वात्मना तत्वनिरूपकत्वस्याभावेन श्रुतिविरुद्धाविरुद्धविभागकल्पनस्य न्याय्यत्वाच्छ्रुति-शास्त्रविरुद्धांशे तामसत्वस्य युक्तत्वात्। तथा सर्वथाप्यप्रमाणिकत्वस्याप्यभावेना पौरुषेयवेदशास्त्रार्थ श्रीविष्णुसर्वोत्तमत्वाद्यविरुद्धांशे तामसत्वाभावेन ग्राह्यत्वस्य पूर्वमुपपादितत्वात्।

एतन्मध्ये यदाह परः "सर्वज्ञमहेश्वरप्रणीतस्य पूर्वमविभक्ततया विद्यमानस्य पुराणराशेरेव ईश्वराज्ञया संक्षेपतोऽष्टादशधाविभागकरणमात्रेण पुराणप्रणेता व्यासमहर्षिर्नापूर्वतया पुराणकर्ता" इति ॥ तदपि तुच्छम् ॥ तथा हि ॥ त्वद्रीत्या व्यासापेक्षया यदि महेश्वर एव ज्ञानादावत्यधिकः स्यात्तदा द्वापारादौ नष्टधर्मज्ञानेषु सल्लोकेषु सर्वत्र ज्ञानव्यवस्थापनाय त्वन्महेश्वरब्रह्मादयो देवाः श्रीमन्नारायणं देवं कुतः शरणं जग्मुः ?। त्वद्रीत्या सर्वज्ञो महेश्वर एव स्वयं कुतो न ज्ञानं व्यवस्थापयामास ?। ब्रह्मादयो देवाश्च महेश्वरमेव कुतःशरणं नेयुः?। वद मन्दात्मन् ! ॥

गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते।
संकीर्णबुद्धयो देवा ब्रह्मरुद्रपुरःसराः ॥
शरण्यं शरणं जग्मुर्नारायणमनामयम् ॥ इत्यादि ॥

प्रमाणसिद्धं विष्णोर्निरङ्कुशज्ञानव्यवस्थापकत्वं, ब्रह्मरुद्रादीनां चासामर्थ्यमसर्वज्ञत्वं च मा अपलप। तव त्वदीयानां चैतादृशदुरभिनिवेश विनाशनायैवास्माभिरीशानस्तुतिखण्डनावसरे माध्वस्तुतावादावेवमुक्तम् :-

**ईशानः सर्ववविद्येत्यमलविपुलसद्वेदवाणीगणेड्यं**
**विद्यानामीश्वरं श्रीपतिममितमहावेदवेदान्तकीनाम् ॥**
**ज्ञानानन्दादिपूर्णं विधिहरमुखरैः प्रार्थितं ज्ञानदाने**
**धूताविद्यावतारं गुरुतममगुरुं नौमि पाराशरं तम् ॥** इति ॥

किञ्च यदुक्तं परेण ''प्रमाणतया भवदभिमतमहाभारतशान्तिपर्वेत्यादिकं'' तदपि निन्द्यम् ॥ यतो हि महाभारतं न केवलं प्रमाणतया माध्वाभिमतम्। किन्तु भवदाचार्यसङ्कराभिमतं च। अन्यथा महाभारतघटकानां भगवद्गीता-विष्णुसहस्रनाम-सनत्सुजातीयानां व्याख्यानाय भवदाचार्यप्रवृत्तिः कथं सञ्जाघटीतिं इति आयुष्मता भवतैवालोचनीयम्। भारतकथागतिश्च त्वदीयतदुदाहरणप्रसङ्गे प्रदश्र्यते। तस्मान्महेश्वरज्ञानादिनिरपेक्षपुराणादिप्रणेता श्रीवेदव्यासः। तद्दोषाभावेऽपि तदनूदितवाक्यप्रणेतृदोषेण पुराणानां तामसत्वं सिद्ध्यति।

तथा प्रतिपाद्यविषयदोषेणापि पुराणानां तामसत्वं पूर्वमुपपादितं ज्ञातव्यम्। वेशास्त्रमूलप्रमेयस्य पुराणेरितस्य दोषाभावेऽपि पाशुपतादिदुरागममूलस्य पुराणोदितस्य विषयस्य दुष्टत्वात्तादृक्पुराणभागस्य तामसत्वाभ्युपगमेनैवोपपत्तौ पुराणस्यामूलचूडं तामसत्वाभावेन प्रमाणत्वेनोदाहरणं च सङ्गच्छते। दर्शनभाषा - गुह्यभाषा - समाधिभाषात्रयेणापि पुराणप्रवृत्तिः सर्वसिद्धेति न किञ्चिदनुपपन्नम्।

तृतीयकल्पमाश्रित्य यदुक्तं ''कल्पदोषेण तामसत्वव्यवस्थापनं युक्ततमम्। शैवानि तामसानि, वैष्णवानि तामसानि इत्युक्तिस्तु तामसकल्पसम्बन्धित्वेन प्रवृत्तेतिज्ञेयमि''ति तत्त्वतितुच्छम् ॥ विकल्पासहत्वात्। तथा हि। कल्पगततामसत्वानुरोधेन तत्कल्पीयपुराणानां तामसत्वं न तु पुराणस्वरूपे तामसत्वं नामास्तीत्याभिप्रायो वा कल्पभेदेन पुराणानां तामसत्वमित्यभिप्रायो वा। नाद्यः। कल्पाख्यकालगतनामसत्वानुरोधेन तत्कल्पीयग्रन्थतामसत्वे कलिकाल-गततामसत्वानुरोधेन कलिकालनिर्मितशाङ्करभाष्यादेरपि तामसत्वं त्वयैवाङ्गीकर्तव्यं स्यात्। किञ्च कालस्य तामसत्वं च तत्कालीनपुरुषतामसत्वानुरोधेनैव वक्तव्यमिति

तत्कालीनतामसपुरुषप्रणेतृकत्वेनैव पुराणानां तामसत्वमङ्गीकृतप्रायमिति प्रथमकल्पखण्डनानवकाशः।

न द्वितीयः। कल्पभेदेन पुराणतामसत्वे च एतत्कल्पीयद्वापर एव निर्मितानामष्टादशपुराणानां कल्पभेदरूपोपाधिविरहात्तामसत्वादिविभागानुपपत्तेः। अतः परोक्तरीत्या तामसत्वादिव्यवस्थाऽनुपपन्नैव। तस्मादप्रामाणिकविषयकत्व-अप्रमातृवक्तृकत्व - विप्रलिप्सामूलकत्वेष्वन्यतमेनैव तामसत्वं निर्णेयमिति शिवसर्वोत्तमत्वाद्यप्रामाणिकविषयकत्वेन क्वचिदप्रमातृवक्तृकत्वेन क्वचिद्विप्र-लिप्सामूलकत्वेन च शैवादिपुराणानां तामसत्वं बोध्यम्। विष्णुसर्वोत्तमत्वादि-प्रामाणिकविषयकत्वेन प्रमातृप्रणेतृकत्वेन विप्रलिप्साद्यमूलत्वेन च वैष्णवपुराणानां सात्विकत्वमवधेयमित्यलं शब्ददोषमूलानभिज्ञस्य माणिक्यमञ्जरीकारस्यापहसित-प्रक्रियापर्यालोचनेन।

शिवद्वेषेण कलिर्वैष्णवमतप्रसञ्जनाय वसन्तात्मकं मधुमुपदिष्टवानित्युप-संहारश्चाद्वैतमताभिनिवेशिनः परवादिनः कथं शोभते?। अद्वैताचार्याणां व्यावहारिकरूपेण शैव-वैष्णवादिषण्मतस्थापनपराणां शिवे भक्तिर्वा विष्णौ द्वेषो वा नोपपद्यत इति शैवामतावलम्बनेन वैष्णवमाध्वनिन्दनं निर्मूलमेवेति माध्वनिन्दनपरेयं परकीयकृतिरनारम्भणीयैव। अत एवोक्तमस्मीयमाध्वस्तुतौ :-

**जीवत्रैविध्यवादे श्रुतिशतगदिते तत्वतो माध्वमार्गे**
**दैत्यः सिद्धो गुरुस्ते भवति तदनुगा दीक्षिताद्याश्च दैत्याः॥**
**जीवत्रैविध्यहीने तव गुरुकथिते ब्रह्मतादात्म्यवादे**
**दैत्यः क्व क्वास्ति देवो वद कृतककुवाक्दैत्यराट्पण्डितेन्द्र॥** इति॥

परमर्थिकाद्वैतवादे वेदशास्त्रादिविचारस्यानारम्भ इव देवदैत्यस्वरूपविचारस्याप्य-नारम्भ इति कल्युपदेशनामकः सर्गोऽत्यन्तहेयः॥

**॥ इति प्रथमसर्गाप्रामाण्यव्यवस्था॥**

॥ श्रीः ॥

## ॥ अथ द्वितीयसर्गविमर्शः ॥

तदेवमेतावता परामर्शेणाद्वैताचार्यस्य सङ्करस्य मणिमन्नामकदैत्यस्वरूपत्वे सिद्धे तस्य परममङ्गलदेवतात्मकशिवावतारत्वं प्रकल्प्य तदनुगुणं वैभवीकृत-तज्जननजीवनमरणादिवर्णनात्मको माणिक्यमञ्जरीघटको द्वितीयसर्गोप्य-प्रामाणिकोऽनारम्भणीय एव ॥

॥ तथा हि ॥ सङ्करे प्रमाणसिद्धदैत्यत्वं नाम श्रीहरिवायुवेदशास्त्रादि-विद्वेषादिस्वरूपत्वम्। तद्गतां च व्यभिचारजातत्वादिकं भगवद्गीतादौ प्रतिपादितं। तथा च गीता :-

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ..... ।
मोघाशा मोघकर्माणः मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः .... ॥
असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ..........॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । इत्यादि ॥

आसुरीं योनिं = व्यभिचारजातं जन्म । तथैव पूर्वमुदाहृतं ज्योतिश्शास्त्रीय-प्रमाणवाक्यम् । तत्राद्वैतिशङ्करस्य जातकपरामर्शपूर्वकं व्यभिचारजातत्वं तथाऽद्वैताद्यप्रामाणिकराद्धान्ताभिनिवेशवतां च विद्यारण्याप्पय्यदीक्षितप्रभृतीनां च परजातत्वादिकं च प्रतिपादितम्। दृष्टं च कंसाद्यसुरेषु व्यभिचारजातत्वादि। प्रथमतो विनिर्मिते आनन्दगिरिकृतशङ्करविजयादौ सङ्करस्य व्यभिचारजातत्वादि-सम्पादक उत्पत्तिक्रमः समुपवर्णितश्च। विधवायां जारजातत्वादेव तस्य सङ्करस्य मृततन्मातृदेहदाहादौ तद्देशीयतत्कालीनजनाऽसहकारश्च यतिना सङ्करेणैव तद्देह-दाहक्रमश्च लोकप्रसिद्धः। एतत्सर्वं समालोच्यैव श्रीमन्नारायणपण्डिताचार्यैः

मणिमञ्जर्यां सुस्पष्टं सङ्करस्य जारजातत्व - परनारीसम्भोग - बौद्धमताभिमान - वेदशास्त्रविद्वेषादिकं वर्णितमिति ज्ञातव्यम्। ततो मणिमञ्जर्याद्युक्तं साङ्करीयं जननजीवनमरणादिचरित्रं सर्वं प्रामाणिकम्। अवश्यं साधकैस्तथैव ज्ञातव्यम्। एतदाच्छादनायैव कालतो विदूरेण विद्यारण्येन शङ्करदिग्विजयान्तरं कल्पितम्। स्वसमीपकाल एव विराजमानं निर्दुष्टं प्रामाणिकं सुमध्वविजयग्रन्थं समालोक्य तदसहमानो मध्वद्वेषी दुरभिमानी विद्यारण्यः पूर्वप्रसिद्धं प्रामाणिकं साङ्करीयं दुश्चरितमाच्छाद्य सर्गसंख्यातो वर्णनशैल्यादितश्च सुमध्वविजयानुगुणमेव शङ्करविजयं स्वयं प्रकल्प्य स्वीयराजकीयप्रभावादितो लोके प्रचारयामास। मूढाः दुरभिमानिनश्च तदेव प्रमाणमिति भ्रान्ताः तादृशं विद्यारण्यकृतमप्रमाणिकं शङ्करदिग्विजयं प्रमाणत्वेन गृहीत्वा तत्पूर्वकालीनं शङ्करविजयादिकमपरिमृश्य प्रवृत्ता माणिक्यमञ्जरी अप्रमाणमूलैवेति स्थूलतः समवलोकिनामपि परिज्ञातं भवति। सूक्ष्मदर्शिनां च मा. मञ्जरीयद्वितीयसर्गे वर्णितस्य विषयस्यानुपपन्नत्वाद्यवलोकनेनाप्यप्रामाणिकत्व-निर्धारणं भवतीत्येतत्किञ्चित्प्रदर्श्यते।

तथाहि :- शंकराचार्यावतारकाले वेदाःसमस्ताः विलीनाः = अतिशयेन लुप्ता अभूवन् इति द्वितीयसर्गारम्भे मा. मंजर्यां वर्णितम्। एतच्चेति-हासतोऽनुपपन्नम्। तदानीं भट्टकुमारिकेन - समस्तबौद्धनिराकरणपूर्वकं वेदशास्त्रपाठप्रवचनोद्धरणं कृतमिति शङ्कराचार्यकृतसर्वसिद्धान्तसारसंग्रह, आनन्दगिरिकृत शङ्करदिग्विजयमाधवीयदिग्विजयादिभिरवगम्यते। सर्वसिद्धान्त-सारसंग्रहे "बौद्धादिनास्तिकध्वस्तवेदमार्गं पुरा किल। भट्टाचार्यः कुमारांशः स्थापयामास भूतले। वेदबाह्यान् निराकृत्य भट्टाचार्ये गतं पथि" इत्युपलभ्यते। आनन्दगिरिशङ्करविजयेप्येवमुक्तम् "भट्टाचार्याख्यो द्विजवरः कश्चिदुदग्देशादागत्य दुष्टमतावलम्बिनो बौद्धान् जैनान् सांख्यान् राजमुखादनेकविद्याप्रसङ्गभेदैः निर्जित्य एषां शीर्षाणि परशुभिः च्छित्वा बहुषु उलूखलेषु निक्षिप्य कटभ्रमणैः चूर्णीकृत्य चैवं दुष्टमतध्वंसमाचरन् निर्भयो वर्तते। श्रुत्वैतदद्भुतं कर्म गुरुः (शंकरः)

शिष्यसमन्वितः। प्राप्तो रुद्राख्यनगरं जयशब्दविजृम्भितम्।'' तदनु जानुमात्रदग्धोऽपि भट्टाचार्यः तं (शंकराचार्य प्रति) जाग्रत्कालेऽनागतो नूतनो बौद्धतर इति प्राह'' इति ॥

विद्यारण्य शङ्करविजयेऽपि :-

उपन्यसत्सु साक्षेपं खण्डयत्सु परस्परं।
तेषूदतिष्ठन्निर्घोषो भिन्दन्निव रसातलम्।
अधःपेतुः बुधेन्द्रेण क्षताः पक्षेषु तत्क्षणम्।
व्यूढकर्कशतर्केण तथागतधराधराः।
निरस्ताखिलसन्देहो विनष्टेतरदर्शनात्।
व्यधादाज्ञां ततो राजा वधाय श्रुतिविद्विषाम्।
आसेतोरातुषाराद्रेः बौद्धानावृद्धबालकम्।
न हन्ति यः स हन्तव्यो भृत्यानित्यन्वशान्नृपः।
कुमारिलमृगेन्द्रेण हतेषु जिनहस्तिषु।
निष्प्रत्यूहमवर्धन्त श्रुतिशाखाः समन्ततः ॥

इत्युक्तम्।

अत एव मणिमञ्जर्यामप्युक्तम् ''उदजृम्भन्त वेदान्ताः धर्मा वर्णाश्रमोचिताः। ब्राह्मणाः तुतुषुर्यज्ञाः प्रावर्तन्त महीतले'' इत्यादि।

एवं च लोकदृष्ट्याऽपि वेदवैदिकमतोद्धारकीर्तिः कुमारभट्टस्यैव वर्तते। न तु शङ्कराचार्यस्य। तस्मात् -

''वेदाध्वविध्वंसकनास्तिकीयधरातलव्यापृतस्य देवर्षिमुखात् देवैः श्रुतत्ववर्णनं शंभोरवताराय प्रार्थनावर्णनं च मा-मञ्जर्युक्तमयुक्तम्। प्रमाणाभावात्। तदानीन्तनवेदवैदिकमार्गस्थितिबोधकोपदर्शितप्रमाणविरोधाच्च। ननु बाह्याकार-

स्वरूपतः वेदवेदान्तादेः विजृम्भण सत्यपि अद्वैतादिपरमार्थतः असत्वात् वेदेषु अद्वैतार्थ प्रदर्शनाय शम्भुप्रार्थनादिकमुपपन्नमिति चेत्। न। बौद्धवादातिरिक्तस्याद्वैतवादस्याभावात्। अत एव शाङ्करकालीनैः कुमारभट्टप्रभृतिभिः ग्रन्थकारैः स्वस्वग्रन्थेषु शाङ्कराद्वैतवादः प्रच्छन्नबौद्धवादः इत्येव वर्णितं समुपलभ्यते। कुमारभट्टोक्तं पूर्वं प्रदर्शितं नूतनोऽयं बौद्धतर इति। भास्कराचार्यस्तु ''महायानिकबौद्धग्रथितं मायावादं व्यावर्णयंतो लोकान् व्यामोहयंति बौद्धमतावलम्बिनः मायावादिनः'' इत्याह।

विज्ञानभिक्षुश्च ''ये तु रज्जुसर्पादिवत् प्रपञ्चस्या त्यन्ततुच्छत्वमिच्छन्ति ते तु बौद्धप्रभेदा एव ''मायावादमसच्छास्त्रं प्रच्छन्नं बैद्धमेवच'' इत्यादि पद्मपुराणवाक्यात् असत्यमप्रतिष्ठंते जगदाहुरनीश्वरमित्यादि गीतावाक्याच्च'' इत्याह॥

पार्थसारथिमिश्रस्तु :- ''तद्वरं अस्मान्मायावादात् महायानिकवादः'' इत्याह॥

रामानुजीयैरप्यद्वैतदर्शनस्यावैदिकत्वं स्वग्रन्थे बहुधा प्रदश्र्य प्रच्छन्नबौद्धत्वमुपपादितम्। अत एव ''प्रच्छन्नबौद्धोऽयमतः प्रसिद्धः'' इति श्री नारायणपण्डिताचार्याः। प्रच्छन्नबौद्धत्वेन संकरः सर्ववादिषु प्रसिद्धः। वयं तु प्रकटबौद्धः संकर इत्येव ब्रूमः इत्यभिप्रायः।

श्रीमन्माध्वैस्तु सर्वेषां दर्शनानां विशेषतोऽद्वैतदर्शनस्यावैदिकत्वप्रर्शनपूर्वकं अद्वैतदर्शनस्य बौद्धदर्शनानन्यत्वं बहुधा निपुणतरमुपवर्णितम् श्रीमदनुव्याख्यानन्यायसुधा - न्यायामृतादिग्रन्थेषु। विशेषतस्तत्पर्यालोचनक्रमश्चैकत्र ''सिविल्सूट्'' नामके स्वग्रन्थे श्रीमत्सत्यध्यानतीर्थश्रीमच्चरणैः हृदयङ्गमं निरूपितो वेदितव्यः।

तथाच स्वरूपतोऽर्थतश्च वेदोद्धारकत्वाभावात् वेदोद्धरणाय रुद्रावतारत्वेन संकराचार्यावतारवर्णनमयुक्तमसङ्गतं च।

तथा विमलाशिवगुरुदम्पत्योः पुत्रत्वेन शंकराचार्यवर्णनं चानुपपन्नम्। *केरलदेशीयैतिह्यानुसारतः - कूष्माण्डविजयानन्दगिरिविजयाभ्यां च विधवा पुत्रत्वश्रवणात्। विद्यारण्यकृतविजयग्रन्थापेक्षया तयोः प्राचीनत्वात्। तदनुसारेण शंकराचार्यस्य विधवायां जारजातत्वादिवर्णनपरा मणिमञ्जर्यप्यकल्पितैवेति सिद्ध्यति ॥ तथा एवं जातस्य शिशोः वैदिकविद्वत्कर्तृकवेदोक्तसंस्कारप्रक्रियाया एवानुत्थानात् ''शंकरमेषचक्रे'' इत्यादिना नामकरणवर्णनमप्यनुपपन्नम्। विष्ण्वंशसम्भूतत्वेन पद्मपादस्य वर्णनमप्यनुपपन्नम्। त्रियुगहूतित्वेन कलौ विष्णोरवताराभावात्। प्रमाणाभावाच्च। सर्वसमर्थरुद्रांशत्वेनांगीकृतस्य त्वत्संकर-स्यायुःक्षीणतावर्णनं - शुम्भुना पुनः अब्दाष्टकायुःप्रदानवर्णनं चानुपपन्नभाषणमेव।

एवं वादकलहे - सूत्रकारं व्यासदेवं विजिग्ये इति वर्णनेन सूत्रकारानभि-प्रेतार्थोपबृंहितत्वं शांकरग्रन्थस्याङ्गीकृत्य - पुनस्सूत्रभाष्यत्ववर्णनं चानुपपन्नमेव।

---

* ಕೇರಳದಲ್ಲಿ ಒಂದು ಐತಿಹ್ಯವಿದೆ. ಕಾಲಡಿಯಲ್ಲಿ ಒಬ್ಬ ವಿಧವೆಯು ತನ್ನ ಜೊತೆಯ ಹುಡುಗಿಯರೊಡನೆ ಶಿವಾಲಕ್ಕೆ ಹೋಗಿರುವಲ್ಲಿ ಅವರಲ್ಲಿ ಕೆಲವರು ಪುತ್ರಾರ್ಥಿಗಳಾಗಿ ಶಿವನನ್ನು ಪ್ರಾರ್ಥಿಸಿದರಂತೆ. ಈ ಬಾಲವಿಧವೆಯೂ ಹಾಗೆಯೇ ಪ್ರಾರ್ಥಿಸಿಕೊಂಡದ್ದರ ಫಲವಾಗಿ ಗರ್ಭಿಣಿಯಾಗಿ ಶಂಕರರನ್ನು ಹಡೆದಳಂತೆ (NSK. p.14) ಪುಟ-43.

ನಂಬೂದ್ರಿಗಳು ಶ್ರೀ ಭಗವತ್ಪಾದಾಚಾರ್ಯರ ಬಗ್ಗೆ ಪರಂಪರೆಯಿಂದ ಕರ್ಣ ಧಾರೆಯಾಗಿ ಬಂದ ವಾರ್ತೆಯನ್ನು ನಂಬಿ ಶ್ರೀ ಆಚಾರ್ಯರಿಗೆ ಈ ಕಾರಣಗಳಿಂದ ತಾವು ಎದುರಾಳಿಗಳಾಗಿರುತ್ತೇವೆಂದು ಹೇಳಿಕೊಳ್ಳುತ್ತಾರೆ. : (1) ಶಿವಗುರುವೆಂಬ ತಂದೆಯು ಕಾಲವಾಗಿ ಒಂಬತ್ತು ತಿಂಗಳಾದ ಮೇಲೆ ಶಂಕರರು ಜನಿಸಿದರು. (2) ಕಲಿಯುಗದಲ್ಲಿ ಸಂನ್ಯಾಸವು ನಿಷಿದ್ಧವಾದರೂ ಸಂನ್ಯಾಸಿಗಳಾರು. (3) ಅವರು ಕರ್ಮಗಳನ್ನು ಬಿಟ್ಟಿದ್ದಲ್ಲದೆ ಕರ್ಮಕಾಂಡವನ್ನು ಹಳಿದು ಕೆಡಿಸಿದರು. (4) ದೂರದಲ್ಲಿರುವ ಬೇರೆಬೇರೆಯ ಪ್ರಾಂತಗಳಿಗೆ ಹೋಗಿದ್ದರು; ಯಾರಯಾರಲ್ಲಿ ಏನೇನು ಆಹಾರವನ್ನು ಸೇವಿಸಿದರೋ! (5) ಪರಮಹಂಸನು ಕುಲಜಾತಿಗಳಿಲ್ಲದವನು, ವಿಧಿನಿಷೇಧಗಳಿಲ್ಲದವನು, ಕರ್ಮಬಾಹಿರನು. (6) ಶಂಕರರು ಜ್ಯೇಷ್ಠ ಪುತ್ರನೊಬ್ಬನಿಗೇ ಪಿತೃವಿನ ಆಸ್ತಿ, ಇತರರು ಗೃಹ ತ್ಯಾಗವನ್ನು ಮಾಡಿ ಸಂನ್ಯಾಸಿಗಳಾಗಿರಬೇಕೆಂದು ನಿಯಮಿಸಿದರು. (7) ಮಾತೃಕಳೇಬರವನ್ನು ತಾವೇ ತುಂಡು ತುಂಡು ಮಾಡಿ ದಹನಕ್ರಿಯೆಯನ್ನು ಜರುಗಿಸಿದರು.

ಈ ಕಾರಣಗಳಿಗೆಲ್ಲ ಯಾವ ಗ್ರಂಥಾಧಾರವೂ ಇಲ್ಲದಿದ್ದರೂ ಈ ಜನರು ಇಂಥ ಕಲ್ಪಿತ ಕಥೆಗಳನ್ನೇ ನಂಬಿಕೊಂಡಿರುತ್ತಾರೆ!

ಲೇಖಕರು : ಸಚ್ಚಿದಾನಂದೇಂದ್ರಸರಸ್ವತಿ

-ಶ್ರೀಶಂಕರಭಗವತ್ಪಾದವೃತ್ತಾಂತ ಸಾರಸರ್ವಸ್ವ, ಪುಟ- 49.

यथाचार्यानभिप्रायत्वे च भाष्यत्वव्याघातात्। तथा - स्वानभिप्रेतार्थबोधकस्य संकरस्य - व्यासदेवेन षोडशवर्षायुःप्रदानवर्णनं, स्वतः परमेश्वरात्मनः तस्य संकरस्य कारणं विनायुष्याभावाङ्गीकरणं च अनुपपन्नमेव।

एवं भूम्यामवताररहितत्वेन प्रमाणप्रसिद्धयोः ब्रह्मसरस्वत्योरत एव कृतत्रेताद्वापरेषु युगेषु कदाप्यनवतीर्णयोः एतत्कलिकाले मण्डनमिश्रशारदा रूपेणावतारकल्पनं, तदर्थं दूर्वासशापकल्पनं चानुपपन्नमेव। सर्वज्ञत्वेनाङ्गीकृतस्य शंकरस्य - कामशास्त्रानभिज्ञत्ववर्णनं च स्वव्याहतम्। कामकलाभिज्ञानाय परकायप्रवेशनेन मृतामरुकराजस्य पत्नीनां विधवानां स्वैरमुपभोगवर्णनं च यतिसार्वभौमत्वविघातकमेव। एतद्विषये शिष्येण पद्मपादेन निषेधे कृतेऽपि - गुरुणा संकरेण कुयुक्त्या तद्वाग्बन्धनकरणं - विद्यारण्यवर्णितं चाधुनिकविमर्शकाणां सांकरीयाणामपि जुगुप्सामावहति ॥ अत एव विषयलम्पटोऽयं संकरः कामिसार्वभौम इत्येव निश्चीयते। अत एव कामकलालोला चेयं जारिणी शारदा स्वपतेः पराजयघोषणेन स्वपतिं सन्यासिनं कारयित्वा कामिना संकरेण साकं स्वेच्छया विजहारेत्येव सिद्ध्यति। न तु तस्याः वाण्यवतारत्वम् संकरस्य महेश्वरत्वं वा सिद्ध्यति। स्वगुरोर्दुर्वृत्तस्याच्छादनाय साभिमानैः तच्छिष्यैः सांकरैः देवतात्वेन परिकल्प्य शारदाप्रतिष्ठापनादिकं समुपवर्णितमिति विमृशतां मनीषिणां मनीषायाः नातिदूरमेतत्।

शारदापेक्षया महामहिम्ने ब्रह्मावतारत्वेनाङ्गीकृताय मण्डनमिश्राय प्रतिष्ठापनादिगौरवं शंकरेण कुतो न प्रदत्तम् ? तं च मंडनं मुण्डिनं विधाय तत्पत्नीं देवतात्वेन परिकल्प्य, प्रतिष्ठाप्य च, तस्याः पूजनादिव्यवस्थापनं कियत् सूपपन्नं भवेत् ? श्रोतुमपि जुगुप्सावहां सर्वनिन्द्यामिमां कथां शांकरमहिमात्वेन वर्णयितुं कथं वा लज्जा न जायते शांकराणाम् ? अत एवोक्तं माध्वस्तुतौ

**“यस्स्त्रीकामी कुयोगी, तमिह हतमतिं भूसुरैर्निन्दनीयं**
**यत्याभासं गुरुं ते कथमिहसमुपावर्णयेः षण्ढकेन्द्र ?” इति ।**

तस्मादेतयोः शारदासङ्करयोर्विषये मणिमञ्जर्यां निरूपिता तत्कालीनप्रसिद्धिमती कथैव साध्वी ॥

एवं स्वेनैव मृतस्वमातृकलेवरदाहकथापि शंकरस्य यतित्वभञ्जकैव। यतेः मृतदेहदर्शनमेवनास्ति। कुतः स्पर्शः? कुतो वा दहनम् ? परं तु एतत्सर्वं कृतं संकराचार्येण। तद्दाहकर्मणि तद्ग्रामीणजनानामसहकारश्च संवर्णितः। तेन ज्ञायते संकरः जारजत्वेनैव तदानीं तद्देशे प्रसिद्धः। सा च तन्माता विधवा व्यभिचारिण्येव। एतत्सर्वं जानन्तः तद्ग्रामीणाः तच्छरीरदाहकर्मणि साहाय्यं नाचरन्। यदि च एतत्सर्गे (मा. मंजर्यां) पूर्वमुक्तरीत्या शंकराचार्यस्य विमलाशिवगुरुदम्पतीजातत्वं, शिवावतारत्वं, जातकर्मनामकरणोपनयनादि सुसंस्कारभरितत्वं च प्रामाणिकं स्यात् तर्हि तद्ग्रामीणजनाः एतादृशमहात्मनः मातापितृविषये, दाहादिकर्मणि च कथमुदासीनाःतिरस्कारमतयश्च भवेयुः? तस्माच्चैषा शिवावतारत्वकथा, दम्पतिभ्यां सम्यग्जातत्वकथा च अनुपपन्नैव।

तथा - गौडपादकारिकायाश्च गौडपादापेक्षामनुसृत्यशंकराचार्यकृतभाष्यमपि, बौद्धागमार्थानुगुणमिति पश्यतां सर्वेषां, इयं गौडपादपादावलम्बिनी शांकरीया भिक्षुपरंपराबक्कस्मामिनामकेन वञ्चकबौद्धेन प्रवर्तितेति मणिमञ्जर्युक्ता दृढनिरूढा भवति। ततः शिव - नारायण - नारदादिमूलेयं परंपरेति वर्णुनमनुपपन्नम्। शङ्करीयायाः परम्पराया बौद्धागमार्थानुगुण्यात्। नारायण - नारद - व्यासादिवाक्येषु क्वापि बौद्धागमार्थस्यादर्शनात्।

एवं - कामकलादिशास्त्रे स्वासर्वज्ञतायाः प्रकटितत्वात् काश्मीरे शंकराचार्यस्य सर्वज्ञपीठारोहणकथाप्यनुपपन्ना। पूर्वमेव मण्डनेन साकं वादकाले

त्वद्रीत्या शारदादेव्या शिवत्वेन, सर्वज्ञत्वेन, निर्दुष्टत्वेन चाङ्गीकृतशंकराचार्यविषये - पुनः काश्मीरस्थले पीठारोहणसंदर्भे कृता शांकरीयपरिशुद्धिशंकाऽपि कथं संगच्छेत ? अनेन ज्ञायते शारदा - न सरस्वतीदेवी। किन्तु स्वैरिण्येव। किञ्च - सर्वज्ञपीठादिविवरणं काश्मीरदेशीयेतिहासग्रन्थे कल्हणकृते राजतरंगिणीनामके न काप्युपलभ्यते इति एतत्सर्वं शांकरैः स्वाचार्यमहत्वाय कल्पितमित्येव ज्ञायते - अत एवोक्तं माध्वस्तुतौ :-

**काश्मीरे मण्डलेऽलं विलसदभिनवाचार्यगुप्तात्तभङ्गः।**
**काश्यां शाब्दैर्जितश्च स्वकुटिलभजगोविन्दवाचाङ्गकूटी॥**
**मिश्रैस्सम्मिश्रितो यः किल परिगणितस्सर्ववादिष्वधस्तात्**
**काप्यर्घ्यं काभिषेकः क च नुतिविभवः ब्रूहि ते संकरस्य॥** इति॥

तथा - द्वात्रिंशद्वार्षीयस्य शंकराचार्यस्य विष्ण्वादिदेवताकृतप्रार्थनादिकं, गङ्गाधरत्वादिस्वरूपप्रदर्शनपूर्वकं अन्तर्धानं कैलासलोकगमनं एवमादिवर्णनं च प्राचीनशंकरविजयग्रन्थविरुद्धम्। प्राचीनग्रन्थे च भगन्धररोगेणातिपीडितस्य संकरस्य तच्छिष्यकृतदुर्गन्धनिवारकमुखवस्त्रपिधानपूर्वकसेवनादिकं वर्णितम्। सांक्रामिकेण तदीयरोगेण तद्देशीयानां नानाजनानां नाशभयेन देशाद्बहिः गुहाविशेषे संकराचार्यदेहस्थापनं तत्रैव मरणादिकमुपवर्णितम्। एतादृग्मरणमेवगुहाप्रवेश इति कथयन्ति। एवं दुर्मरणं प्राप्तवतः शंकराचार्यस्य निर्याणं पश्चात्तनेन विद्यारण्येन स्वग्रन्थे वैभवीकरणपूर्वकं वर्णितमनुसृत्य प्रवृत्ता माणिक्यमञ्जरी चाप्रमाणमूलैव।

एवं - शरीरावच्छिन्नस्य संकराचार्यस्य मेरुपर्वतप्रदक्षिणाभावात्। शरीरानवच्छिन्नस्य त्वद्रीत्या निर्गुणब्रह्मभावापन्नस्य च प्रदक्षिणक्रियाद्ययोगात् सर्वथाऽपि हनुमत्कर्तृकसंकरवहनक्रिया अनुपपन्नैवेति ''प्रदक्षिणे मेरुगिरेर्हनुमानुवाह'' इत्यादि वर्णनं अयुक्तमप्रामाणिकं च।

तथा च आन्तरिकं अवैदिकबौद्धमतस्यैवोज्जीवनं अद्वैतसिद्धान्तव्यपदेशेन कृतवतः - अवैदिकशैवागमाद्युदीरिताचारवतः, अत एव बाह्यतोऽप्यवैदिकस्य शंकराचार्यस्य चतुर्दिक्षु आम्नायपीठचतुष्टयस्थापनं चाज्ञजनप्रतारणमेव ।

एवमनेकविधानुपपन्नभाषणपरिपूर्णा माणिक्यमंजरीयं कथं परिग्राह्या स्यात् ? सर्वं सुधियो विभावयन्तु ।

**॥ इति द्वितीयसर्गाप्रामाण्यव्यवस्था ॥**

॥ श्रीः ॥

# तृतीयसर्गविमर्शः

श्रीमदानन्दतीर्थभगवत्पादानां च पूर्वोदाहृतेभ्यः श्रुतिस्मृति पुराणेतिहास-वचनेभ्यः श्री मुख्यप्राणत्वे निर्दुष्टचरिते च प्रमापितेऽपि तानि वचनान्यपर्यालोच्य स्वकल्पितवचनानि केवलमाश्रित्य पुनःपुनः क्रोध-मूकमधु-दानवावतारत्ववर्णनपरः अयं माणिक्यमञ्जरीगतः तृतीयः सर्गः - श्रीमन्मध्वनिन्दनायैव प्रवृत्त इति बहिरङ्गत एव प्रेक्षावद्भिर्ज्ञायते। अन्तरङ्गतोऽपि असङ्गतानुपपन्नभाषणत्वादिना तदप्रामाण्यं प्रदर्श्यतेऽधुना :-

प्रशिथिलाद्वैतदर्शनप्रतिष्ठापनाय पुनः शंकराचार्यः विद्यारण्यरूपेणाविर्बभूवेति तार्तीयादिमश्लोके यदुक्तं तदनुपपन्नम्। त्वन्मतरीत्या अद्वैताचार्यस्य सङ्करस्य कैवल्यं प्राप्तस्य पुनरुत्थानायोगात्। यतो हि - कैवल्यप्राप्तिर्नामाद्वैतदर्शने निर्गुणब्रह्म-भावः॥ एतत्सर्गीये विंशतितमे श्लोके - पद्मपादुकस्य कैवल्यप्राप्तिवर्णनावसरे - त्वयैवोक्तम् :- ''अपगतसकलाभिमानस्य देहसत्तादशायां जीवन्मुक्तत्वम्। देहपातानन्तरं सायुज्यापरपर्यायकैवल्यमिति रहस्यमिति'' ॥ तथा च शङ्कराचार्य-शिष्यपरम्परां प्रविष्टस्य पद्मपादुकस्य कैवल्यमङ्गीकुर्वाणेन त्वया त्वन्मूलगुरोः सङ्करस्यावश्यं कैवल्यमङ्गीकरणीयम्। ततश्च पुनरावृत्तिरहितकैवल्यस्थितिं प्राप्तवतः शङ्कराचार्यस्य विद्यारण्यात्मना पुनरागमनं कथं सङ्गच्छते। शिष्यस्य कैवल्यमङ्गीक्रियते मूलगुरोश्च नाङ्गीक्रियत इत्येतस्य सामीचीन्यमायुष्मता त्वयैव पर्यालोचनीयम्। तस्मादेतदनुपपन्नभाषणमेव।

एवं ''यदा यदाहि धर्मस्ये''त्यादिरूपस्य श्रीकृष्णवाक्यस्यात्रविषये प्रमाणतयोदाहरणं च सर्वथाऽनुपपन्नम्। यतो हि श्रीकृष्णस्थापितं च दर्शनं नाद्वैतदर्शनम्। किन्तु भगवद्गीतायां ''उत्तम पुरुषस्त्वयः परमात्मेत्युदाहृतः''

तथा च आन्तरिकं अवैदिकबौद्धमतस्यैवोज्जीवनं अद्वैतसिद्धान्तव्यपदेशेन कृतवतः - अवैदिकशैवागमाद्युदीरिताचारवतः, अत एव बाह्यतोऽप्यवैदिकस्य शंकराचार्यस्य चतुर्दिक्षु आम्नायपीठचतुष्टयस्थापनं चाज्ञजनप्रतारणमेव।

एवमनेकविधानुपपन्नभाषणपरिपूर्णा माणिक्यमंजरीयं कथं परिग्राह्या स्यात् ? सर्वं सुधियो विभावयन्तु।

॥ इति द्वितीयसर्गाप्रामाण्यव्यवस्था ॥

॥ श्रीः ॥

# तृतीयसर्गविमर्शः

श्रीमदानन्दतीर्थभगवत्पादानां च पूर्वोदाहृतेभ्यः श्रुतिस्मृति पुराणेतिहास-वचनेभ्यः श्री मुख्यप्राणत्वे निर्दुष्टचरिते च प्रमापितेऽपि तानि वचनान्यपर्यालोच्य स्वकल्पितवचनानि केवलमाश्रित्य पुनःपुनः क्रोध-मूकमधु-दानवावतारत्ववर्णनपरः अयं माणिक्यमञ्जरीगतः तृतीयः सर्गः - श्रीमन्मध्वनिन्दनायैव प्रवृत्त इति बहिरङ्गत एव प्रेक्षावद्भिर्ज्ञायते। अन्तरङ्गतोऽपि असङ्गतानुपपन्नभाषणत्वादिना तदप्रामाण्यं प्रदर्श्यतेऽधुना :-

प्रशिथिलाद्वैतदर्शनप्रतिष्ठापनाय पुनः शंकराचार्यः विद्यारण्यरूपेणाविर्बभूवेति तार्तीयादिमश्लोके यदुक्तं तदनुपपन्नम्। त्वन्मतरीत्या अद्वैताचार्यस्य सङ्करस्य कैवल्यं प्राप्तस्य पुनरुत्थानायोगात्। यतो हि - कैवल्यप्राप्तिर्नामाद्वैतदर्शने निर्गुणब्रह्म-भावः॥ एतत्सर्गीये विंशतितमे श्लोके - पद्मपादुकस्य कैवल्यप्राप्तिवर्णनावसरे - त्वयैवोक्तम् :- ''अपगतसकलाभिमानस्य देहसत्तादशायां जीवन्मुक्तत्वम्। देहपातानन्तरं सायुज्यापरपर्यायकैवल्यमिति रहस्यमिति'' ॥ तथा च शङ्कराचार्य-शिष्यपरम्परां प्रविष्टस्य पद्मपादुकस्य कैवल्यमङ्गीकुर्वाणेन त्वया त्वन्मूलगुरोः सङ्करस्यावश्यं कैवल्यमङ्गीकरणीयम्। ततश्च पुनरावृत्तिरहितकैवल्यस्थितिं प्राप्तवतः शङ्कराचार्यस्य विद्यारण्यात्मना पुनरागमनं कथं सङ्गच्छते। शिष्यस्य कैवल्यमङ्गीक्रियते मूलगुरोश्च नाङ्गीक्रियत इत्येतस्य सामीचीन्यमायुष्मता त्वयैव पर्यालोचनीयम्। तस्मादेतदनुपपन्नभाषणमेव।

एवं ''यदा यदाहि धर्मस्ये''त्यादिरूपस्य श्रीकृष्णवाक्यस्यात्रविषये प्रमाणतयोदाहरणं च सर्वथाऽनुपपन्नम्। यतो हि श्रीकृष्णस्थापितं च दर्शनं नाद्वैतदर्शनम्। किन्तु भगवद्गीतायां ''उत्तम पुरुषस्त्वयः परमात्मेत्युदाहृतः''

"मन्मनाभव मद्भक्तो मद्याजी"

"मत्तः परतरं नान्यत्किञ्चिदस्ति"

इत्यादिभिः श्रीविष्णुसर्वोत्तमत्व - जगत्सत्यत्वादिप्रमेयपूरितं द्वैतदर्शनमेव। अतोऽद्वैतदर्शनस्थापनायैतदुदाहरणमसङ्गतम्।

किञ्च विद्यारण्येन माध्वीयद्वैतसिद्धान्तनिराकरणपूर्वकं अद्वैतदर्शन-संस्थापकव्यापारश्च नैव कृतः। किन्तु विद्यारण्यः स्वमतसंस्थापकग्रन्थ-निर्माणद्यपेक्षया भाट्टप्रभृतिपरदर्शनपरबहुलग्रन्थनिर्माणादिष्वेव विपुलं व्यापृतः परिदृश्यते। अत एवोक्तं माध्वस्तुतौ :-

**दौर्बल्यं साङ्करीये शिथिलकुसमये वीक्ष्य कीर्त्यैककामी**
**विद्यारण्योऽन्यदीयानययुतविवृतिग्रन्थकृत्याऽस्तगर्वी**
**दुर्मन्त्रेष्वग्रगण्यः सुखमुनिसमयं जेतुकामोऽप्यवाप्त**
**च्छेदो ह्यक्षोभ्यतीर्थैर्विलपति विजयस्तम्भभूमावधस्तात्॥ इति**

अधिकमुत्तरत्र विवरिष्यते।

किञ्चात्र प्रथमश्लोके "नूतनभेदवादिशब्द" प्रयोगेण मध्वाचार्यं कटाक्षीकृत्य मध्वसिद्धान्तानुवादपूर्वकं तन्मतनिराकरणप्रतिज्ञा या सा केवलं प्रतिज्ञारूपैवेत्युत्तरत्र करिष्यमाणद्वैताद्वैतप्रक्रियापरामर्शेण निरूप्यते।

पुनरत्र प्रस्थापितं च परेण यत् क्रोधादिचरितं तत्र निर्दुष्टभगवदवतारस्य भार्गवस्य क्रोधकल्पनायाः स्वतो दैत्यस्य क्रोधस्य पुना राक्षसत्वशापकल्पनायाः, तथा तस्यैव निर्मूलाया मूकत्वकल्पनायाः, तस्यैव देवस्वरूपवसन्तात्मक-मधुत्वकल्पनायाः तथा कलिशिष्यत्वकल्पनायाश्चानुपपन्नता पूर्वमुपपादितात्रापि संस्मार्यते।

इदं चात्र विचारणीयम्। अद्वैतदर्शनेऽद्वैतस्यैव पारमार्थिकत्वात्, द्वैतस्य

मिथ्यात्वात् द्वैतावलम्बेन प्रवृत्तया देवदैत्यभाववर्णनवार्तायाः कथमुपपन्नता ? इति। न च व्यावहारिकभेदाङ्गीकारेणोपपन्नतेति वाच्यम्। व्यावहारिकभेदस्य बाध्यत्वे बाध्यार्थग्राहिणः त्वदुदाहृतश्रुतिस्मृतिपुराणादेः शुक्तिरूप्यप्रत्यक्षस्येवा -प्रामाण्या-पातात्। प्रामाण्यमपि व्यावहारिकमिति चेत्तर्हि अप्रामाण्यं श्रुत्यादीनां परमार्थिकमित्यङ्गीकृतं स्यात्। अस्त्विति चेत्तर्हि तथागतचरणशरणत्वं तव स्यात्। तथा च त्वद्गुरोः सङ्करस्य देवत्वं मध्वाचार्यस्य दैत्यत्वं च नास्तीति तदुपपादकस्त्वत्प्रयासः सर्वोऽप्यनुपपन्न एव।

यदि भेदोऽबाध्यस्तर्ह्यद्वैतहानिरिति बाध्याद्वैतदर्शनस्थापनाय प्रवृत्तस्य देवत्ववर्णनमनुपपन्नमेव। अबाध्यद्वैतदर्शनसंस्थापकस्य श्रीमध्वाचार्यस्य दैत्यत्ववर्णनं चानुपपन्नमेव। तस्मात्परवाद्युक्तमेतत्सर्वमुन्मत्तप्रलापायितम्।

त्वद्रीत्या जगद्वञ्चनाय प्रवृत्तस्य मधुनामकदैत्यस्य स्वोत्पत्तये बुद्धिपूर्वं दुष्टकुलान्वेषणं चानुपपन्नम्। वञ्चकः खलु लोके उत्तमस्थलादिकमन्विष्य जगद्वञ्चनं करोतीति दृष्टम्। अत एवोक्तं सुमध्वविजये सङ्करविषये :-

''जनो नमेन्नापरथेति मत्वा शठश्चतुर्थाश्रममेष भेजे।
पद्माकरं वा कलुषीचिकीर्षुः सुदुर्दमो दुष्टगजो विशुद्धम्।। इति।।

तस्मादत्र श्रीमध्वकुलपावित्र्यमसहमानेन निन्दनैकनिर्भरेण परवादिना स्वोन्मत्तताख्यापकं यत्किञ्चित्प्रजल्पनं कृतमिति स्पष्टं ज्ञायते।

किञ्च स्वबुद्धिस्थनिन्दनानुगुणं ''मद्यगेहमिति'' पदं प्रकल्प्य मद्यसम्बन्धि-गृहाद्यर्थवर्णनं ''मध्यगेहमिति'' पाठान्तरं गृहीत्वा जारसंयोजकमित्यादिवर्णनं च यत्परकृतं तत्सर्वं तत्तद्देशीयापभ्रष्टभाषाननुगुणमिति सर्वमनुपपन्नम्। तौलवभाषायां ''नडिल्लायेति'' पदेन व्यवहरन्ति स्म। 'नड्' पदं च मध्यार्थकम्। 'इल' पदस्य गेह इत्यर्थः। एवञ्च संस्कृतभाषायां परिवर्तनेन मध्यगेहेति पदप्रयोगो जायते। वर्तन्ते चैवं बहुधा प्रयोगाः। मूडिल्लायः = पूर्वालयः, तोटन्तिल्लायः = पूगवनम्। ओडिपू

= रजतपीठपुरमित्यादयः। एतादृशं सार्वजनीनं विचारं जानन्नप्ययं मूर्खः परवादी मा. मञ्जरीकारो यन्निर्मूलमपार्थयति तदैतत्केवलं मध्वद्वेषमूलम्।

मणिमञ्जर्यां श्रीनारायणपण्डिताचार्यैः सङ्करमधिकृत्योत्पत्तिविषये वर्णितं यद् :-

उत्पन्नः सङ्करात्मायं सर्वकर्मबहिष्कृतः।
इत्युक्तः स्वजनैर्माता सङ्करेत्याजुहाव तम्॥ इत्यादि॥

तच्च नवीनशङ्करविजयाद्यननुगुणमपि पूर्वोक्तरीत्या प्राचीनशङ्करविजयादौ सूचितत्वेनेतिहासानुगुणमेव। तदसहमानेन परवादिना श्रीमध्वाचार्यस्य जारजत्वादिकं प्रकल्प्य मध्वेति नामकरणं मध्वशब्दस्य दोषपरतया बहुधानिष्पत्तिप्रदर्शनादिकं यत्कृतं तत्सर्वं श्रीमध्वाचार्यविषये प्रमाणैकतमत्वेन प्रसिद्धस्य सुमध्वविजयेतीतिहासस्य अननुगुणमिति निन्दनीयम्।

किञ्च परेण यदुक्तं ''आदरेण नाम्ना व्यधुर्मध्व''मिति तथा ''कृतोपनीतो विधवातनूजो द्विजैस्तदानीं मिलितैः कृपातः'' इत्यादिकं तत्सर्वमनुपपन्नभाषणमेव। तथा हि। त्वद्रीत्या गोलकत्वेन - विधवातनूजत्वेन निश्चयवन्तस्ते विप्रा आदरेण बालस्य नामकरणं, कृपयोपनयनं च कथं वा कुर्वन्ति। विप्रास्तादृशं बालं बहिष्कुर्वन्ति खलु। तस्मादेतद्वर्णनं सर्वं अपहसनीयम्॥

अपि च मध्वेत्याख्या ह्यानन्दतीर्थमुनेर्वेदशास्त्रादितः संप्राप्ता। न तु नामकरणादितः। पवित्रपुण्यतममातापितृकृतनामकरणसंस्कारतो ''वासुदेवेत्य''-भिधानं प्राप्तम्। इतिहासप्रसिद्धमेतत्सर्वं परित्यज्य मध्वेति नामकरणप्रक्रियां प्रकल्प्य निन्दनाय प्रवृत्तोऽयं मा. मञ्जरीकारः श्रीमध्वद्वेषमदिरापानोन्मत्त इति बहिष्कार्यः।

शङ्कराचार्यपरम्पराप्राप्तेन पद्मपादुकेन परकल्पितेन अविचारं शिष्यत्वेन स्वीकृत्य मध्वस्याद्वैतसिद्धान्तरहस्यबोधनवर्णनं तदनन्तरं बहिष्कारपूर्वं शापदान-

वर्णनं इत्यादि च परमेश्वरत्वेन परवाद्यङ्गीकृतस्य पद्मपादुकस्य मौर्ख्यापादकमिति पूर्वमुपपादितं बोध्यम् ।

मणिमञ्जर्यां कृतं ''पत्तलजन्मनेति'' प्रयोगमसहमानेन परेण ''उडुपीति'' पदमपार्थपरतया यद्वर्णितं । तदप्यसाधु । यतो हि ''कारडी''त्यपभ्रष्टभाषायां प्रयोगो वर्तते । केरलदेशीयः कालट्यादिप्रदेशो तौलवदेशपरिसरभाग इति प्रसिद्धः । तौलवभाषायां 'कार' शब्दः पादे प्रयुज्यते । तलार्थे 'अडीति' प्रयोगः क्रियते । तदनुरोधेन संस्कृतभाषायां परिवर्तनावसरे पदतल - पत्तल - अङ्घितलेत्यादयः प्रयोगाः सम्भवन्ति । एतादृशीं भाषापरिवर्तनमर्यादां धिकृत्य परेण तौलवं 'उडुपीति' पदं परित्यज्य आन्ध्रभाषीयं तत्पदं परिकल्प्य अपार्थपरतया यद्वर्णितं तत्परवादिदौरात्म्यदौर्बल्यप्रकाशकमेव ।

माध्वानां निन्दनपरतया यत्सौरपुराणमित्युदाहृतं तत्सर्वं वैष्णवसम्प्रदाय-सदाचार - सन्मत - सन्मुद्राधारणादिबोधकवेदभारत - भागवत - पञ्चरात्राद्यगम-विरुद्धत्वादनुपादेयमेवेति पूर्वमुक्तम् । श्रीमन्मध्वमते एव श्रुत्यादीनां प्रामाण्यं सूपपन्नमिति पूर्वमुपपादितं बोध्यम् । उपपादयिष्यते चोत्तरत्र ।

यदुक्तं शिवद्रोहेण गुदव्रणपीडितो मध्वो माघनवम्यां शरीरमजहादिति, तत्क्वेदमुपलब्धं मृत्पिण्डबुद्धिना दुरात्मना परेण । स्वकपोलकल्पितपुराणं च न प्रदर्शितम् । स्वपूर्वाचार्यवाक्यं च नास्ति । लोकप्रसिद्धसुमध्वविजयाख्येतिहासविरुद्धं च । व्यासद्रोहेण वेदशास्त्रादिनाशनेन च क्षीणायुषो भगन्धरादिरोग-पीडयाऽत्यन्तदुःखितस्य स्वीयमूलगुरोः सङ्करस्य दुर्मरणं प्राचीनशङ्करविजयसिद्धं मणिमञ्जर्यां वर्णितमसहमानेन मा. मञ्जरीकारेण निर्मलचरित्रस्य श्रीमध्वाचार्यस्यापि दोषसल्लेपनं कार्यमिति दुर्बुध्या कल्पितं वर्णनमिदमिति विमर्शकाः सुधियो विभावयन्त्येव । अत एवोक्तं माध्वस्तुतौ ।

**यच्छिष्या स्त्रीजितं यं सुचरितमिति लज्जाविहीनास्तुवाना**
**हास्यास्ते त्वद्गुरुर्दुर्गदमृतिमगमत्सूत्रकृद्द्रोहतो द्राक् ॥ इति ॥**

तदलम् । स्वव्याहत्यनुपपन्नभाषणादिना स्वयंकृतस्वशिरच्छेदस्य श्रीमध्वमुनिनिन्दात्मकवादस्य परकीयस्य मृतमारणप्रक्रियया ॥

**॥ इति तृतीयसर्गाप्रामाण्यव्यवस्थापकविमर्शः ॥**

॥ श्रीः ॥

## ॥ अथ चतुर्थसर्गविमर्शः ॥

एवं चतुर्थसर्गोऽप्यप्रामाणिकमय इत्युपदर्श्यते ।

स्वकपोलकल्पितं श्रीमध्वाचार्यकालनिर्णयमनुसृत्य श्रीमध्वाचार्यानन्तरं विद्यारण्यस्य जन्मेति यः कालनिर्णयः प्रदर्शितो मा. मञ्जरीकारेण सोऽनुपपन्न इति प्रतिपादनाय प्रथमतः कालनिर्णयः क्रियते ।

श्रीमध्वाचार्याणामवतार एकोनविंशत्युत्तरशतद्वयपुरस्कृतचतुस्सहस्री-परिमितकलौ गते सति (४२१९) चत्वारिंशदुत्तरसहस्रीमिते (१०४०) शालि-वाहन शके (क्रि.श. 1117) विलम्बिसंवत्सरस्याषाढकृष्णपक्षीयचतुर्थ्यामिति । तथोपसंहारो अष्टनवत्युत्तरद्विशत्युपस्कृतसहस्रचतुष्टयोपेतकलिहायने (४२९८) एकोनविंशत्युत्तरैकादशशतीमिते (१११९)· शा. शके (क्रि.श. 1196) पिङ्गलसंवत्सरीयमाघशुद्धनवम्यामिति यदुक्तं मा. मञ्जरीकारेण ।

तदयुक्तम् । अन्तरङ्गप्रमाणबहिरङ्गप्रमाणविरोधात् । तथाहि । श्रीमध्वाचार्यैः स्वग्रन्थे श्रीमन्महाभारततात्पर्यनिर्णये

''चतुः सहस्रे त्रिशतोत्तरेगते
संवत्सराणां तु कलौ पृथिव्याम् ।
जातः पुनर्विप्रतनुः स भीमो
दैत्यैर्निगूढं हरितत्वमाह ॥''

इति स्वावतारकालं त्रिशतोत्तरचतुःसहस्रीपरिमितकलिवर्षोत्तरात्मकः (४३००) इति स्पष्टमुक्तः । मा. मञ्जरीकारेण च ४२१९ संख्याकः कलिवर्षः परिगृहीतः । अत्र पूर्वोक्तान्तरङ्गप्रमाणविरोधः स्पष्टः । तथा श्रीमन्मध्वाचार्याणां साक्षाच्छिष्याः श्रीनरहरितीर्थाः । एतैःकळिङ्गदेशे (ओरिस्सादेशे) श्रीमध्वाचार्याणामाज्ञया

राज्यव्यवस्थापनं कृतम्। तत्र राज्ये षष्ठाशीत्युत्तरैकशताधिकैकसहस्रीपरिमत-शालिवाहनशकवर्षादारभ्य (११८६ शा. शक) (क्रि.शक 1264) पञ्चदशोत्तर द्विशताधिकैकसहस्रीमितशालिवाहनशकवर्षपयन्तं (१२१५ शालिशक) (1293 क्रि. शक.) श्रीनरहरितीर्थसद्भाववर्णनपरतया समुपलब्धैः शिलाशासनैः च तत्काले श्रीमध्वाचार्याणां भूमाववस्थानं सिद्ध्यत्येव। मा. मञ्जरीकारेण च १११९ संख्याके शालि. शके श्रीमध्वाचार्यावतारोपसंहारो वर्णितः। स च पूर्वोक्त श्रीनरहरितीर्थीयकूर्मशिलाशासनविरुद्धत्वादुपेक्ष्यः।

तस्मात्प्राचीनैस्तथाऽऽधुनिकैश्चेतिहाससंशोधकैः सप्रमाणं निर्णीतः कालस्तु ४३०० संख्याककलिवर्षानन्तरं सम्प्राप्ते ११६० मितशा. शकीयविलम्बि-संवत्सरीयाश्वीजशुद्धविजयशम्यां श्रीमध्वाचार्याणामवतारः (क्रि. शक. 1238)। तथा १२३९ मित शा. शकीयपैङ्गलसंवत्सरीय माघशुद्धनवम्यां (क्रि.शक. 1317) श्रीमध्वाचार्यावतारोपसंहारः। तथा च श्रीमध्वाचार्याणां काले एव विद्यारण्यस्यापि जन्म आसीदित्येव सम्पद्यते।

तथा हि। मा. मञ्जरीकारेण शा. शके ११५० मितवर्षे (क्रि.शक. १२२७) विद्यारण्यस्य (माधवाचार्यस्य) जन्म। तथा शा. शके १३०८ तमे वर्षे (क्रि. शक. १३८५) निर्याणं विद्यारण्यस्येतिलिखितम्। तदयुक्तम्। एवं सति आहत्याष्टपञ्चशदुत्तरैकशतं (१५८) विद्यारण्यस्याप्युष्यमिति स्यात्। तदसम्भावितं मानुषमानातीतत्वात्। विद्यारण्येतिहाससंशोधकैः पौर्वात्यैः पाश्चिमात्यैश्च विनिर्णीतकालमानविरोधाच्च। विद्यारण्यस्येतिहासपरिशोधकास्तावत् शा. शक ११८९ वर्षमारभ्य (क्रि. शक. 1266) शा. शक १३०९ वर्षपर्यन्तं (क्रि.शक. 1386) विद्यारण्यजीवनमिति अभिप्रयन्ति। सम्भूय विद्यारण्यजीवितकालो विंशत्यधिकशतमानात्मकः (१२० वर्ष) भवति। स च मनुष्यायुःपूर्णपरिमित इति नासम्भावितः। एतस्मिन् काले एव वेदान्तदेशिकस्यापि संस्थितिः संगच्छते। तस्य कालस्तु क्रि. शक. 1268 समयतो क्रि.शक. 1369 समयपर्यन्तमिति निर्णीतः।

तथा च श्रीमध्वाचार्याणामदृश्यकालात् पूर्वोक्तात्. शकीय १२३९ मिताब्दात् (क्रि.श. १३१७) पूर्वमेव शा. शकीय ११८९ मितवर्षे विद्यारण्यः सञ्जातः। अतः श्रीमध्वाचार्यावतारोपसंहारादेकत्रिंशत्समाभ्यः परं विद्यारण्यस्य मायणात्सुकीर्तिनाम्यां जन्मेति वर्णनं मा. मञ्जरीकारकृतं अप्रामाणिकम्।

श्रीमध्वाचार्याणामदृश्यकालावधौ विद्यारण्यः प्रायः पञ्चाशद्वर्षीय आसीत्। वेदान्तदेशिकोऽपि तावद्वर्षीय एव प्रायः। तावद्वर्षीयोऽपि विद्यारण्यो द्वैतसिद्धान्तप्रतिष्ठापकानां श्रीमध्वाचार्याणां पुरतोऽद्वैतसिद्धान्तस्थापनाय न प्रयत्नं कृतवान्। तत्र कारणं तु विद्यारण्यगुरुत्वेन वा क्वचित् तद्गुरुगुरुत्वेन वा प्रसिद्धस्य 'विद्याशङ्करेति' प्रथितस्य शृङ्गेरीपीठीयसन्यासिपरम्परागतस्य श्रीमध्वाचार्यैः कृतः पराजयः। वर्णितश्चायं सुमध्वविजयग्रन्थे श्रीमध्वाचार्यकृतदक्षिणदिग्विजयप्रस्तावे। तदवलोकनेन भयभरविवशस्वाशयो विद्यारण्यः स्वसिद्धान्तस्थापनमार्गमपहाय स्वगोष्ट्यां प्रलपतिस्मेति ज्ञायते। अत एवोक्तं श्रीमध्वाचार्याणां साक्षाच्छिष्यैः श्रीमत्त्रिविक्रमपण्डिताचार्यैः वायुस्तुतौ :-

आक्रोशन्तो निराशा भयभरविवशस्वाशया छिन्नदर्पा
वाशान्तो देशनाशस्त्विति बत कुधियां नाशमाशादशासु।
धावन्तोऽश्लीलशीला वितथशपथशापा शिवा शान्तशौर्याः
त्वद्व्याख्यासिंहनादे सपदि ददृशिरे मायिगोमायवस्ते॥ इति॥

पक्षान्तरेऽपि क्रि. श. 1278 तमे वर्षे श्रीमध्वाचार्याणामवतारोपसंहार इति तत्काले 1266 तमे क्रि. शके. जनितः विद्यारण्यो द्वादशवर्षीय आसीदिति ज्ञायते। तावतापि युक्तं चैतत्।

श्रीमध्वाचार्याणां साक्षाच्छिष्याः श्रीपद्मनाभतीर्थास्तथा श्रीनरहरितीर्थाः श्रीमाधवातीर्था श्रीमदक्षोभ्यतीर्थाश्चेति। तेषु श्रीपद्मनाभतीर्थनरहरितीर्थयोः विद्यमानसमयं विहाय श्रीमाधवाक्षोभ्यतीर्थश्रीचरणयोः काले विद्यारण्यः

स्वीयराजकीयप्रभवाद्यवलम्बनेन मायिमतस्थापनाय कथञ्चित् प्रवृत्तःस्यात्। तथा श्रीमदक्षोभ्यतीर्थमुनिना पराजितः सन् श्रीजयतीर्थमुनिपर्यन्तमपि महाप्रयत्नं कृत्वा स्वीयवार्धक्ये श्रीजयतीर्थमुनिनाऽपि पराजितः स्वीये विंशत्यधिकशतायुष्ये मृतिमाप विद्यारण्यः इति इतिहासपरिशीलनेनैतत्सर्वमवगम्यते।

तथा हि। शैवमार्गावलम्बिनं हरिहररायनामकं कञ्चन समाश्रित्य विद्यारण्येन विजयनगरराज्यं संस्थापितमिति या किंवदन्ती सा प्रथमतो विचारणीया। विद्यारण्यकृतविजयनगरसाम्राज्यस्थापनात्पूर्वं तत्र पम्पाक्षेत्रे किञ्चिद्राज्यमपि नासीदिति न मन्तव्यम्। होसळादिराजकुलचरित्रावलोकनेन तत्पूर्वमपि तत्र सुव्यवस्थितं किञ्चिद्राज्यमासीदित्यवगम्यते। तदधिपतिर्मान्यखेट (मळखेड) मण्डलाधीश्वरस्य रघुनाथरायस्य पूर्वानुबन्धी वा तद्वंशीयसुहृद्वरो वा कश्चन विष्णुभक्तो मण्डलेश्वरो भवेत्। स च श्रीमध्वाचार्याणां परमानुग्रहपात्रभूतो राज्यं पालयति स्म। अत एव श्रीमध्वाचार्याणां साक्षाच्छिष्यप्रवरा श्रीपद्मनाभतीर्थ श्रीचरणाः तत्र राज्ये श्रीमध्वमतावबोधकाः तत्रैव पम्पाक्षेत्रे पुण्यतमे स्वान्तिमकाले वृन्दावनस्था अभूवन्। तद्वृन्दावनमद्यापि राराजते। एतेषां वेदान्तसाम्राज्य-निर्वहणकालः क्रि.श. 1318 मितवर्षतः क्रि.शक. 1324 वर्षपर्यन्तः। कर्नाटकादिदेशे श्रीपद्मनाभतीर्थश्रीचरणानां महान् प्रभाव आसीदिति तदानीन्तनैः श्रीमध्वाचार्यसाक्षाच्छिष्यैः श्रीहृषीकेशतीर्थैर्निर्मितसम्प्रदायपद्धतिग्रन्थे "यः कर्नाटकपूर्वसज्जनगुरुः श्रीपद्मनाभाह्वय" इति वर्णनेन ज्ञायते। तदनन्तरं श्रीमन्मध्वाचार्यपीठाधीश्वराः श्रीनरहरितीर्थश्रीमच्चरणाः श्रीमन्मध्वाचार्यानुग्रहेण भारतदेशीयपूर्वदिग्भागकळिङ्गदेशे राज्यव्यवस्थापनवैदिकधर्मसंस्थापनादिकार्यैः प्रसिद्धाः प्रभवश्च पम्पाक्षेत्रेऽपि तदानीन्तनवैष्णवराजस्य सन्मार्गदर्शनादौ स्वीयराजनीतिचातुर्य - पुण्यप्रभावादिना परमानुग्रहं कुर्वन्तः श्रीमध्वसिद्धान्त-संस्थापनमातन्वन्तस्तत्रैव पम्पाक्षेत्रे वृन्दावनस्था अभूवन्। एतेषां वेदान्त-साम्राज्याधिपत्यकालः क्रि. श. 1324 वर्षमारभ्य 1333 वर्षपर्यन्तः।

तदनन्तरं श्रीमध्वसिद्धान्तसंस्थापनमहाकार्यभारं समुद्वहन्तः श्रीमध्वाचार्यशिष्यश्रेष्ठा श्रीमाधवतीर्थस्वामिपादा उत्तरभारतभागे वैदिक-सिद्धान्तस्थापनाय सञ्चरन्तो बहुकालं सप्तदशवर्षपर्यन्तं तत्रैव निरताः। ततः स्वपूर्वाचार्याणां वैष्णवकार्यक्षेत्रं श्रीपम्पाक्षेत्रं प्रति पुनरागमनकाले स्वायुष्यक्षीणतामवलोक्य श्रीमदक्षोभ्यतीर्थेभ्यः संस्थानाधिपत्यं प्रदाय मणूरुग्रामे भीमातीरे वृन्दावनस्था अभूवत्। एतेषां वेदान्तसामाज्याधिपत्यकालः क्रि.श. 1333 वर्षतो 1350 वर्षपर्यन्त इति ज्ञायते।

यद्यप्येतत्सर्वमितिहासादिकं कालगर्भे विलीनं सत् परकृतस्वप्रचाराति-शयादिना चाधुनातनैर्नोपलभ्यते। तथापि नैतदसम्भावितम्। श्रीमध्वसिद्धान्त-संस्थापन वैष्णवराज्यस्थापनयोश्च सामर्थ्यातिशयभाजां श्रीमध्वानुग्रहमूर्तीणां श्रीपद्मनाभतीर्थ - नरहरितीर्थादीनां पम्पाक्षेत्रे वृन्दावनप्रवेशकालपर्यन्तं सद्भावोऽद्यापि वृन्दावनसंस्थितिश्चेमं सर्वमितिहासं साधयिष्यति।

अत एव कतिपयकालानन्तरं श्रीमुख्यप्राणानुग्रहबलाच्छ्रीव्यासराजतीर्थ-श्रीमच्चरणाः सम्प्राप्तकुहुयोगाख्यापत्परिहरणद्वारा वेदान्तकर्नाटकोभयसाम्राज्याधिपाः सन्तः श्रीहरिवायुभक्तं सद्वैष्णवं श्रीकृष्णदेवरायं पुरो विधाय वैष्णवसाम्राज्यं पुनः संस्थाप्य सर्वतोमुखं श्रीमध्वसिद्धान्तसमुन्नाहमाचरन् निराकुर्वंश्च अन्यमतीयप्रभावम्।

श्रीमाधवतीर्थश्रीमच्चरणानामसन्निधिकाले वैष्णवद्वेषी विद्यारण्यः स्वानुकूलं शैवं हरिहरनामकं कञ्चन समर्थमवलम्ब्य माध्वपरम्परानियमितमेतद्वैष्णवराज्यं स्वनियन्त्रितमाकर्तुकामः स्वीयकुटिलराजतन्त्रप्रयोगादिना शीघ्रं 1336 क्रि. शकीयवर्षे हरिहररायं (बुक्करायं) शैवदीक्षाभरितं राज्येऽभ्यषेचयत्। 'स्मार्तो च्छ्रायदुरन्धर' इति 'अत एव बुक्कराजविशेषणं ऐतिहासिकप्रमाणे परिदृश्यते' तावत्काले विद्यारण्यो एकोनसंप्ततिवर्षीय आसीत्। स्वीयचतुष्पष्टिवर्षे एव

स्वीकृतसन्यासो विद्यारण्यो भुवनेश्वरीप्रमुखशाक्तेयविद्यासु निपुणः स्वीयदुर्मन्त्रप्रयोगादिना सुवर्णवृष्ट्यादिकं प्रदर्श्य अधुनातनीयसायिबाबादिवत् मन्दजनान् व्यमोहयत्। दुष्टावैदिकमतस्थापनकार्ये पुरा सङ्कराचार्यस्य भैरवीविद्येव विद्यारण्यस्येदानीं भुवनेश्वरीविद्या दौत्यं चकार। अन्यथा लक्ष्मीपतिश्रीहरि-विद्वेषिणोऽद्वैताचार्यस्य तस्य कथं वा लक्ष्मीविद्या सम्पत्करी भूयात्॥

एवमासुरविद्याप्रभावातिशयेन समस्तराज्यं स्वहस्तनियन्त्रितमाकलय्याद्वैत-सिद्धान्तस्थापनाय तथा वैष्णवमतनिर्मूलनाय च बद्धादरो मोक्षफलस्य श्रीमन्मध्व-सिद्धान्तसुरतरोः कुठारप्रायोऽभवत्। विजयनगरपुनः प्रतिष्ठापनकाले विद्यारण्यस्य यतिरूपेण सद्भावविषये पम्पाक्षेत्रीयशिलाशासनं प्रमाणम्।

नाकेष्वर्केण मितनृपते शालिवाहस्य याते
धातोरब्दे सुगुणगणिते मासि वैशाखनाम्नि।
शुक्ले पक्षे सुरगुरुयुते सौम्यवारे सुलग्ने
सप्तम्यां श्रीविजयनगरं निर्ममे निर्ममेन्द्रः॥ इति॥

निर्ममेन्द्रः = सन्यासी विद्यारण्यः। १२५८ शा. शकवर्षे (क्रि. शके. 1336). धातुसंवत्सरीय वैशाखशुद्धसप्तम्यां बुधवासरे विजयनगरं निर्ममे = पुनःप्रतिष्ठां चकार। तथैवेतिहाससंशोधनकारणामाशयः।

1331 क्रि. शकीय वर्षे सन्यासं स्वीकृत्य 1386 क्रि.श. वर्षपर्यन्तं जीवितस्य विद्यारण्यस्य सन्यासाश्रमीयकाल आहत्य (५५) पञ्चपञ्चाशत्संख्यको भवति। एतेन मा. मञ्जरीकारेण यदुक्तं ''क्रमसन्यासमाश्रित्य स्वीयवार्धक्ये स्वीकृतसन्यासो विद्यारण्यः स्वायुष्यकालेषु अन्तिमनववर्षेष्वेव सन्यासाश्रम्यासीत्। 'विद्यारण्य' इति नामप्राप्तिकालेऽक्षोभ्यतीर्थनामभावान्माधवाचार्यनामसद्भावकाले एव अक्षोभ्यतीर्थमुनिना समागमो वक्तव्यः। तथा च विद्यारण्यपराजयप्रतिपादको विद्यारण्यनामघटितः अक्षोभ्यतीर्थयतिविजयसूचकः

"असिना तत्वमसिना परजीवप्रभेदिना।
विद्यारण्यं महारण्यमक्षोभ्यमुनिरच्छिनत्" इति ॥

शिलाशासनश्लोक अप्रामाणिक इति ॥ तत्सर्वमपहस्तितं वेदितव्यम्। पूर्वप्रदर्शितेन विद्यारण्येतिहासपरामर्शकप्रमाणेन विद्यारण्यस्य सन्यासस्वीकारानन्तरं पञ्चपञ्चाशद्वर्षकालपर्यन्तं (५५) जीवनमित्यवगमात्। तथा च क्रि.शकीय 1331 समयतः क्रि.श. 1386 समयपर्यन्तं सन्यासाश्रमे विद्यामानस्य विद्यारण्यस्य क्रि.श. 1350 समयतः क्रि.श. 1365 वर्षपर्यन्तं वेदान्तसाम्राज्ये विराजमानस्य श्रीमदक्षोभ्यतीर्थमुनेश्च समागमो विद्यारण्यनामावस्थायामेवोपपद्यत इति "असिना तत्वमसिनापरजीवप्रभेदिना। विद्यारण्यं महारण्यमक्षोभ्यमुनिरच्छिनत्" इति शिलशासनीयश्लोकोऽबाधितः।

किञ्च विद्यारण्यशिष्यस्य बुक्करायस्य राज्यपालनावसानकालः क्रि.शक. १३७६ पर्यन्त इति परिशोधनेनावगम्यते। तदानीं विद्यारण्यः सन्यासी भूत्वा राज्यकार्यं च निर्वहति स्मेति च इतिहाससिद्धो विषयः। एतदन्यथाऽनुपपत्या च मा. मञ्जरीकारोक्तः विद्यारण्यस्य अन्तिमनववर्षमात्रं सन्यासरूपेण सद्भावविषयः सर्वथैव परित्याज्यः। अन्यथा बुक्करायशासनकाले विद्यारण्यस्य यतिरूपेणाभावप्रसङ्गात्।

तस्मात् सन्यासाश्रमं स्वीकृत्य पञ्चपञ्चाशद्वर्षपर्यन्तं (५५) जीवितस्य विद्यारण्यस्य श्रीमदक्षोभ्यतीर्थश्रीमच्चरणैस्तथा श्रीजयतीर्थश्रीमच्चरणैश्च समागमो वादयुद्धः विद्यारण्यपराजयो मध्वसिद्धान्तविजय इत्यादिसर्वं सूपपन्नम्। श्रीजयतीर्थश्रीचरणास्तावत् क्रि.श. १३६५ वर्षात् क्रि.श. १३८८ वर्षपर्यन्तं श्रीमध्वपीठाधिष्ठिता आसन्। १३८६ मित क्रि.श. वर्षे मृतिं गतस्य विद्यारण्यस्य तत्पूर्वं एकविंशतिवर्षपर्यन्तं विद्यामानैः श्रीजयतीर्थश्रीचरणैः समागमो वादविनोदो विद्यारण्यपराजयः, जयतीर्थविजयश्च इत्यादिकं सर्वं जयतीर्थविजयादि ग्रन्थप्रतिपादितं परमं प्रमाणमिति सिद्ध्यति।

वाद्युद्धे श्रीमदक्ष्योभ्यतीर्थैः विद्यारण्यस्य पराजयप्रापणवृत्तान्तः परमतीयग्रन्थेऽपि वर्तते - तथाहि वेदान्तदेशिकाचार्यमधिकृत्य प्रवृत्ते आचार्य-चम्पूकाव्ये :- ''अथ कदाचिदखिलबुधजनरञ्जनमङ्गळमति-विकसितनिर्वापित-गीर्वाणगुरुगर्वाङ्कुरस्य विविधगुणशेवधे विजयनगरपतेरास्थाने विद्यारण्येन सममक्षोभ्यमुनेर्मध्वमतमूर्धन्यस्य तत्वमसीतिवाक्ये तरङ्गितमदावदामोकः प्रादुरासीत् । तदा समुदिता चिन्ता तस्य राजशिरोमणेः तत्वनिर्धारणे दक्षस्तटस्थः को भवेदिति ।

''प्रसक्ते युवयोर्वादे प्राक्तनोक्तिविदां वरम् ।
मान्यं वेङ्कटनाथार्यं मध्यस्थं मनुते मनः ।''

स च ..............जयापजयौ तत्क्षणविरचितेन -

असिना तत्वमसिना परजीवप्रभेदिना ।
विद्यारण्यं महारण्यमक्षोभ्यमुनिरच्छिनत् ।।''

इति पद्येन विद्योतयामास ''इति । तथा वेदान्तदेशिकवैभवेऽपि

''कदाचिदक्षोभ्यमुनेश्च विद्यारण्यस्य जातं बहुलं विवादम् ।।
विलिख्यभूपो विबुधाय यस्मै संप्रेषयामास तमाश्रयेऽहम् ।।''

तत्वमसिना तं विद्यारण्यं मुनिस्तदाक्षोभ्यः । अच्छिनदित्यवदद्यः तं सेवे तत्वनिर्णये चतुरम् ।।'' इति च ।।

तस्मात् मा. मंजरीकारकृतं एतच्छ्लोकापलपनं अपार्थीकरणमित्यादिकं तन्मौढ्यप्रदर्शकं तथा माध्वप्रद्वेषमूलकं च। एतच्छ्लोकापार्थीकरणस्य निराकरणप्रकारश्चोत्तरत्र प्रदश्यते ।।

**इति श्रीमध्वाचार्यादिकालनिर्णय विचारः ।।**

तदेवं श्री माधवतीर्थश्रीचरणानन्तरं श्रीमध्वसिद्धान्तसंस्थापनभारं समुद्वहन्तः श्रीमदक्षोभ्यतीर्थश्रीमच्चरणाः राजकीयप्रभावदुर्लभेनाद्वैतसिद्धान्त संस्थापनबद्धादरं

विद्यारण्यं निगृहीतुकामाः श्रीलक्ष्मीनरसिंहमुख्यप्राणोपासनादिना समवाप्त-विशेषानुग्रहाः वादयुद्धाय विद्यारण्यं समाह्वयन्। तदानीं विद्यारण्यः त्र्यशीत्यधिकवर्षीयः (८३) आसीत्। न तु मा. मञ्जरीकारोक्तरीत्या षोडशाब्दः। पूर्वोक्तेतिहासपरामर्शविरोधात्। तथैव मा. मञ्जर्यां तस्य विद्यारण्यस्य शंकराचार्यावतारत्ववर्णनं चायुक्तम्। तन्मतरीत्यानिर्गुणब्रह्मात्मभावं प्राप्तवतः शंकराचार्यस्यावतारायोगात्॥ अस्मन्मतरीत्या च मणिमन्नामकदैत्यत्वाङ्गीकार-प्रसंगात्। अप्रामाणिकाद्वैतदर्शनाभिनिवेशशालिनः विद्यारण्यस्य गीताद्युक्तप्रकारेण महादैत्यावतारत्वमेवोचितम्॥ अत एव वैदिक जातकर्मादिवर्णनं चायुक्तम्। अवैष्णवानां दैत्यानां वैदिकाधिकाराभावात्। कामकलाभिज्ञस्यै कन्या-पाणिग्रहणवर्णनं चात्यन्ततुच्छम्। सर्वज्ञेश्वरावतारत्वाङ्गीकारविरोधात्। अतः शंकराचार्यस्य तथा विद्यारण्यस्य परकायप्रवेशन - वधूपरिग्रहणादिना कामकला-भिज्ञानसंपादनं वर्णयता मा. मञ्जरीकारेणैव दैत्यावतारत्वमुररीकृतं भवति। भगवत्प्रीतिं विना कामकलादिज्ञानाय को नाम दैत्येतरः गृहाश्रमं स्वीकुर्यात्? तस्मात् पौनःपुन्येन तद्वर्णनं तदनुयायिनां मायिनां निर्लज्जताख्यापकमेव।

यत्तु परेणोक्तम् - अक्षोभ्यस्य दानवत्वं तु न केवलं जन्मनैव कर्मणापीति वेद्यमिति तत्तुच्छम्। श्री हरिद्वेष, गुरुद्वेष, ब्रह्मात्मैक्यवादित्वजगन्मिथ्यात्व-वादित्वाद्यन्यतमस्य दैत्यलक्षणस्य गीतादिशास्त्रोदितस्याक्षोभ्यतीर्थेऽभावात्। तथा सद्वैष्णवमार्गरतानां सात्विकत्वं - देवत्वं च प्रतिपादयद्भ्यः भारतभागवतादि-प्रमाणेभ्यः विरोधात्। सौरादिपुराणानां अप्रामाण्यस्य पूर्वं व्यवस्थापितत्वेन स्वोक्तार्थे पुनः पुनः तदुदाहरणस्य भ्रान्तिमूलत्वात्। अवैदिकानां अवैष्णवानां च दैत्यस्वरूपत्वं तत्र तत्र जरासंधरावणादिनिदर्शनपूर्वकं समर्थितमिति अवैदिका-वैष्णवाग्रेसरस्य विद्यारण्यादेरेव दैत्यस्वरूपत्वं न्याय्यम्। सद्वैष्णवसदा-चारसन्मताभिनिवेशिनां अत एव दुर्वादिवारणविदारणदक्षदीक्षाणां श्रीमदक्षोभ्य-तीर्थश्रीमच्चरणादीनां देवस्वरूपत्वं भगवत्प्रियत्वं च सिद्धमिति मा. मञ्जर्युक्तं सर्वं माध्वद्वेषमूलमेव।

दुर्वादिग्रगण्यस्य विद्यारण्यस्य निग्रहाय प्रवृत्ता श्रीमदक्षोभ्यतीर्थ श्रीमच्चरणाः "तत्वमसीति" "महावाक्यमधिकृत्य प्रवृत्ते वाग्युद्धेऽद्वैतपरत्वं निराकृत्य द्वैतपरत्वं समर्थ्य विद्यारण्यं सम्पूर्णं पराजित्य द्वैतसिद्धान्तं संस्थाप्य विजयशिलास्तम्भमा-चन्द्रार्कस्थायिनं समस्तविद्वज्जनसमक्षमं संस्थापयामासुरित्येतत्प्रमाणप्रसिद्धम् । दृश्यते चाद्यापि स विजयस्तम्भो 'मुळबागिलु' प्रदेशे पर्वतस्योपरि । अङ्गीकृतश्च प्राच्यशिलाशासनपरिशोधकाधिकारिवर्गैः प्रमाणतया । समुल्लिखितश्च श्रीमदक्षोभ्य-तीर्थाणां विजयसमुद्घोषणपरः श्लोकोऽयं विजयस्तम्भे :-

**"असिना तत्वमसिना परजीवप्रभेदिना ।**
**विद्यारण्यं महारण्यमक्षोभ्यमुनिरच्छिनदिति ॥"**

अत्यन्तं सुव्यवस्थितक्रमेण प्रवृत्तेऽस्मिन् वाग्युद्धे मध्यस्थतयाऽभिमतेन रामानुजमतीयेन विद्वद्वरेण वेदान्तदेशिकाचार्येण विनिर्मितोऽयं निर्णायकः श्लोक इति लोकप्रसिद्धिः । तथा दृश्यते च देशिकाचार्यचरितवर्णनग्रन्थे ।

परन्तु विद्यारण्याक्षोभ्यतीर्थयोर्मध्ये सम्प्रवृत्ता वाग्युद्धसरणिः किंप्रकारेति नोपलभ्यते । एतत्सर्वमसहमानेन मा. मञ्जरीकारेण स्वकपोलकल्पितां काञ्चन वाक्यार्थसरणिमाश्रित्य श्रीमदक्षोभ्यतीर्थानां पराजयस्य विद्यारण्यविजयस्य च संस्थापनपरतया यच्चित्रितं स्वग्रन्थे, तत्सर्वं पूर्वप्रदर्शितबहुप्रमाणविरुद्धमिति यद्यप्यग्राह्यमेव । तथापि तत्कल्पितवाक्यार्थसरण्याः विमर्शने कृते विद्यारण्यपराजयो श्रीमदक्षोभ्यतीर्थदिग्विजयश्च सिद्ध्यतीति प्रदर्श्य परवादिमौढ्यं प्रकाश्यते चाधुना ।

अक्षोभ्यतीर्थाः :-

"गुणोत्कर्षे देवदेवस्य विष्णो............" ।

"नारायण एक एवेदमग्रआसीन्नब्रह्मा न च शङ्करः" ।

"नारायणाद्रुद्रो जायते" ।

"मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय।"

"वेदैश्च सर्वैरहमेव वेद्यः।"

"मां विधत्तेऽभिधत्ते माम्" इत्यादिभिः

शतशः श्रुतिस्मृतिभिर्विष्णोः सर्वोत्तमत्वस्य गुणपूर्णत्वस्य च स्पष्टं प्रतिपादितत्वाद्ब्रह्मसूत्रे च ब्रह्मपदार्थस्य श्रीविष्णोर्गुणपूर्णत्व - जगत्कर्तृत्वादेः सद्युक्तिभिः समर्थितत्वाच्च शिवसर्वोत्तमत्वादेर्निराकृतत्वाच्च शिवसर्वोत्तमत्वादि बोधकानां पाशुपतादिदर्शनानामप्रामाण्यस्य व्यवस्थापितत्वाच्च, शिवसर्वोत्तमत्वादि-प्रतिपादकतया प्रतीयमानानां पुराणवाक्यानां पाशुपतादिदर्शनान्तरमूलत्वेन तामसजनव्यामोहनाय प्रवृत्तत्वादप्रामाण्यम्। अतो न तद्विरोधः श्रुतिसूत्रमूलानां विष्णुसर्वोत्तमत्वप्रतिपादकानां सात्विकपुराणानां किञ्चित्कार इति विष्णुसर्वोत्तमत्वजगत्सत्यत्वादिकमेव सिद्धान्तः इति ॥

विद्यारण्य :- पुराणानां तामसत्वं नाम किम् ?। पुराणेषु सत्विकादिविभागे प्रमाणं वा किमिति ? ॥

अक्षोभ्यतीर्थाः :- एष निष्कण्टकः पन्था यत्र सम्पूज्यते हरिः।
कुपथं तं विजानीयाद्गोविन्दरहितागमम् ॥

इति भारतवाक्यपर्यालोचनेन तथा :-

"यानि सर्वपरं विष्णुं वदन्ति परमेश्वरम्।
तानि सर्वाणि शास्त्राणि सात्विकानि मतानि वै ॥"
"प्रजापतिं कृशानुं च तथा देवीं सरस्वतीम्।
परत्वेन वदच्छास्त्रं राजसं परिचक्षते ॥"
"यच्छास्त्रं लिङ्गपारम्यं परं देवमुमापतिम्।
तमः प्रवर्तकं वक्ति तत्तामसमुदाहृतम् ॥"

इत्यादि वाक्यपर्यालोचनेन च विष्णुसर्वोत्तमत्वप्रतिपादकत्वं सात्विकत्वम्। चतुर्मुखादिपारम्यप्रतिपादकत्वं राजसत्वम्। शिवलिङ्गादिपारम्यप्रतिपादकत्वं तामसत्वमिति लक्षणं सिद्ध्यति। विभागश्च कथितः पद्मपुराणे :-

वैष्णवं नारदीयं च तथा भागवतं शुभम्।
गारुडं च तथा पाद्मं वाराहं शुभदर्शने॥
षडेतानि पुराणानि सात्विकानि निबोध मे॥
ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च।
मात्स्यं कौर्म्यं तथा लैङ्गं शैवं स्कान्दंतथैव च।
आग्नेयं च षडेतानि तामसानि निबोध मे॥ इति॥

विद्यारण्यः :- एवं चेत् स्कान्दपुराणस्य तामसत्वात् मध्वकृतभाष्यादौ स्वोक्तार्थे तत्पुराणवाक्यसमुदाहरणं कथं सङ्गच्छते ? इति॥

अक्षोभ्यतीर्थाः :- स्तुतिमूलस्य विष्णुसर्वोत्तमत्वादिप्रतिपादकस्य वाक्यस्य स्कान्दादिघटकस्यापि सात्विकत्वादेव तदुदाहरणं युक्तमेव। तामसप्रचुरेऽस्मिन् स्कान्दादावपि श्रीविष्णुपारम्योपदेशनादिकं न परित्यक्तं इति ज्ञापनाय श्रीमध्वाचार्यैः स्वोक्तार्थे सूत्रभाष्यादावुपष्टम्भकत्वेन ग्रहणं सङ्गच्छते।

विद्यारण्यः :- ननु, सङ्कीर्णाः सात्विकाश्चैव राजसाश्चैव तामसाः।
यस्मिन् कल्पे च यत्प्रोक्तं पुराणं ब्रह्मणा पुरा॥
तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते।

इति वाक्यस्य कल्पानुगुण्येन ब्रह्म तामसत्वविशिष्टः तामसादिपुराणानि प्रणिनायेत्यर्थपरिकल्पनं कार्यम्। तच्चायुक्तम्। कल्पगततामसत्वानुगुण्येन ब्रह्मणः तामसत्वे

कलिकालगतदौष्ट्यानुगुण्येन कल्किरूपस्य भगवद्विष्णोः दुष्टत्वकल्पनाप्रसङ्गात् इति चेत्

अक्षोभ्यतीर्थाः :- न। अनुक्तोपालम्भात्। पुराणानां तामसत्वं नाम 'कल्पीयतामसत्वविशिष्टब्रह्मप्रणीतत्वमिति' नास्माभिरुक्तम्। किन्तु ''कुपथं तं विजानीयाद्गोविन्दरहितागम''मित्यादिना पूर्वं प्रदर्शितप्रमाणेन शिवलिङ्गादिपारम्यप्रतिपादकत्वं तामसत्वमित्यस्मदभिप्रेतम्। अतो न ब्रह्मकल्क्यादेर्तामसत्वापादनावकाशः।

विद्यारण्यः :- ननु शिवपारम्यप्रतिपादकानां पुराणानां तामसत्वकथनमयुक्तम्। पुराणवाक्यान्तरनिरोधात्। तथाहि। प्रभासखण्डे :-

चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः।
अष्टादशपुराणेषु शेषेषु भगवान् शिव॥ इति॥

तथा स्कान्दे शिवरहस्यखण्डे :-

तत्र शैवानि शैवं च भविष्यं च द्विजोत्तमाः।
मार्कण्डेयं तथा लैङ्गं वाराहं स्कान्दमेव च .........॥
त्रीणिलक्षाणि संख्यया
ग्रन्थानां महिमा सर्वैःशिवस्यैव प्रकाश्यते।
विष्णोर्हि वैष्णवं तद्वत्तथा भागवतं द्विजाः।
नारदीयपुराणं च गारुडं वैष्णवं विदुः॥
ब्राह्मपाद्मे ब्रह्मणो द्वेअग्नेराग्नेयमेककम्।
सावित्रं ब्रह्मवैवर्तमेवमष्टादश स्मृताः॥
दशशैवपुराणानि सात्विकानि विदुर्बुधाः।
वैष्णवानि च चत्वारि तामसानि मुनीश्वराः॥

ब्राह्मं पुराणद्वितयं राजसं परिकल्पितमित्यादि ॥

अत्र स्पष्टं शैवपुराणानां सात्विकत्वं, वैष्णवपुराणानां तामसत्वं कथितमिति चेत्

अक्षोभ्यतीर्थाः :- न। यतो हि त्वदुदाहृतपुराणवाक्येषु वैष्णवपुराणानां तामसत्वे हेतोरकीर्तनाद् ''ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम्। मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥ यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम्। अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत् ॥ इति ॥

ऋगाद्या भारतं चैव पञ्चरात्रमाथाखिलम्।
मूलरामायणं चैव पुराणं चैतदात्मकम् ॥
ये चानुयायिनस्त्वेषां सर्वे ते च सदागमाः।
दुरागमास्तदन्ये ये तैर्न ज्ञेयो जनार्दनः ॥

इत्यादौ वेद-भारत-पाञ्चरात्राद्यनुसारित्वरूपयुक्तिप्रदर्शनपूर्वकं विष्णुप्रतिपादकानां पुराणानां सात्विकत्वप्रतिपादनात् प्राबल्यम्। अतो प्रबलस्य दुर्बलेन विरोधो अकिञ्चित्कर इति वैष्णवपुराणानां सात्विकत्वमबाधितम्। तथा शैवपुराणादीनां पाशुपतादिदुःशास्त्रमूलत्वादप्रामाण्यं, वैष्णवपुराणादीनां वेद-मूलत्वात्प्रामाण्यमिति व्यवस्थायाः पूर्वं प्रदर्शितत्वात् वैष्णव-पुराणानां सात्विकत्वबोधकविभागवाक्यान्येव पौराणिकानि मान्यानि। तदितराणि तु व्यामोहकानीति मन्तव्यम्।

विद्यारण्यः :- ननु सर्वपुराणानामपि प्रामाण्यमेवाङ्गीकार्यम्। सात्विकराजस-तामसत्वकथनं तु कल्पगततामसत्वादिकमनुसृत्य प्रवृत्तम्। अतः

सात्विकत्वादिधर्मावलम्बनेन प्रामाण्यादिव्यवस्थापनमयुक्तम् इति चेत्।

अक्षोभ्यतीर्थाः :- न। त्वयैव पूर्वं खण्डितत्वात्। किञ्च कालात्मके कल्पे स्वतो जडस्वरूपे सात्विकत्वादिधर्मकल्पनाया अयुक्तत्वाच्च। सात्विकादिधर्मोपेतपुरुषसम्बन्धप्राचुर्यादेव कल्पेषु सात्विक-कालत्वादिव्यवहारदर्शनात्। जीवेषु सात्विकत्वं च दृढहरि-भक्त्यादिस्वरूपत्वम्। तामसत्वं च दृढहरिद्वेषादिस्वरूपत्वम्। राजसत्वं च मिश्रहरिभक्तिद्वेषादिस्वरूपत्वम्। एतच्च "श्रुण्वे वीरमुग्रमुग्रं दमायन् अन्यमन्यमतिनेनीयमानः। एधमान-द्विडुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्"

इत्यादि श्रुतिभिर्भगवद्गीतादिभिश्च सिद्धम्। तथा चैतादृश-सात्विकसुजनमोक्षोपयोगि श्रीहरि पारम्यादितत्त्वज्ञानोत्पाद-कपुराणत्वं सात्विकपुराणत्वम्। तामसजनतमःप्रापकशिव-पारम्याद्यन्यथाज्ञानोत्थापकपुराणत्वं तामसत्वमित्याद्येव वक्तव्यम्। अन्यथा कालोपाधिकत्वेऽपि पुराणेषु परस्परं विरुद्धविषयकत्वेनान्यतराप्रामाण्यमपरिहार्यमेव। तस्मादुभय-सिद्धप्रामाण्यकवेदशास्त्राद्यनुसारिणां पुराणानां प्रामाण्यं तदननुसारिपुराणानामप्रामाण्यमित्येव व्यवस्था। अष्टादश-पुराणातिरिक्तानि सङ्कीर्णपुराणानीति न सन्त्येवेति तेषां चतुर्थविभागशङ्काप्यनवसरेति मन्तव्यम्॥ त्रिविधजीवानुगुणं पुराणगणं प्रणिनाय भावान् बादरायण इति सिद्धान्तः।

विद्यारण्यः :- ननु सर्वपुराणानां 'शिव' एवादिकर्तेति महाभारतशान्ति-पर्वण्यप्युक्तम्।

''भूयः स भगवान् ध्यात्वा चिरं शूलवरायुधः ।
असृजत् सर्वशास्त्राणि महादेवो महेश्वरः ॥
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्याह्येताश्चतुर्दश ॥

इत्युपक्रम्य...........

तस्मै वेदान् पुराणं च दत्तवानग्रजन्मने ॥''

इत्युपसंहृतम् । अतः शिव एव पुराणादिप्रणेता । व्यासमहर्षिश्च ब्रह्ममुखाच्छ्रुत्वा अष्टादशधा चतुर्लक्षसंक्षेपकर एवेति चेत्

अक्षोभ्यतीर्थाः :- न । श्रीमन्नारायणावतारस्य वेदव्यासस्य सर्वज्ञत्वेन पुराणादि-निर्माणादौ ब्रह्मरुद्रादिमुखतः श्रवणानपेक्षणात् । अन्यथा ज्ञानव्यवस्थापनाय ब्रह्मरुद्रेन्द्रादिभिर्नारायणप्रार्थनाद्यनुपपत्तेः । भारतवाक्यं च शिवः श्रीहरिं चिरं ध्यात्वा तदनुज्ञया मोहकसर्वशास्त्राण्यसृजदित्यर्थपरम् । ''अङ्गानि वेदाश्चत्वार'' इत्युत्तरवाक्यं तु चतुर्दशविद्यास्थान बोधनपरम् । ''अग्रजन्मने दत्तवानिति'' वाक्यं तु ब्रह्मणे समर्पितवानित्यर्थपरम् । अन्यथा शिवस्यैव सर्वविद्याधिपतित्वे ब्रह्मादिदेवैस्तत्प्रार्थनाया एव कार्यत्वात् श्रीमन्नारायणप्रार्थनादिकं तत्कृतमसङ्गतं स्यात् । अतः समस्तवेदशास्त्राणि विष्णुबुद्धिस्थान्येव सर्वदा । तदुपदेशेन तत्तत्काले ब्रह्मरुद्रादिदेवैः वेदादिकं प्रवर्त्यते । तथा च

''मत्स्यरूपेण मयाऽशेषमेतत्कथितम् ।
व्यासरूपमहं कृत्वा संगृण्हामीत्यादि ॥''

रूपं मात्स्यवचनं चानुकूलितं भवति । तस्मात्सात्विकेषु वैष्णव - नारदीय - भागवतादिषु पुराणेषु पाञ्चारात्रागमे भारतादौ च

वर्णितं वैष्णवधर्माचरणं तप्तचक्रांकनोर्ध्वपुण्ड्रधारणादिकं च सर्वं वेदमूलत्वान्मुमुक्षुभिः सर्वैरनुष्ठेयम्। शैवाद्याचारविचारादिकं च वेदामूलत्वान्नानुष्ठेयं सात्विकैरिति सिद्धम्।

विद्यारण्यः :- ननु तप्तमुद्राधारणादौ वेदावाक्यं न श्रूयत इति कथं वेदमूलत्वं वैष्णवाचारस्येति चेत्।

आक्षोभ्यतीर्थाः न। तप्तमुद्राधारणस्य श्रुतिमूलत्वात् तथा हि तैत्तरीयश्रुतिः -

''चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि। तेन पवित्रेण शुद्धेन पुनाति पाप्मानमरातिं तरेम ॥ इति ॥

अस्या अर्थस्तु — येन चरणेन = चक्राङ्कनेन पूतः = शुद्धः। अतप्ततनूरित्यनेन वेदान्तरस्थवाक्येनैकार्थ्यात्। दुष्कृतानि = पापानि, तरति। विततं = विस्तृतं पुराणं = पुरातनं तच्चरणं = सुदर्शनं पवित्रं = पावनकरणं कर्तृ च इति योजना चरणपवित्रशब्दयोः पर्यायत्वेनावयवार्थविशेषमादायापौन-रुक्त्यम्। पवित्रशब्दस्यावयवार्थस्तु ''पुवः संज्ञायाम्'' (पा.सू. ३-२-२८५) कर्तरि चर्षिदेवतयोरिति (पा.सू. ३-२-१८६) देवतासंज्ञायां कर्तरि करणे च त्रप्रत्ययविधानात्। ''पुनाति च त्रायते चेत्यतः'' पवित्रमित्येकायनब्राह्मणे निरुक्तत्वात्। यद्वा पविं वज्रं त्रायत इति पवित्रमिति। एवञ्चान्येषामपि स्वसम्बन्धेन पावित्र्यापादकस्य स्वतः पावित्र्यं किं वक्तव्यमिति कैमुतिकन्यायसिद्धत्वात्। शुद्धेन = अस्पृष्टदोषगन्धेन, पवित्रेण = स्वसम्बन्धिनामपि दुष्कृततरणहेतुना, तेन = चरणेन, पूताः = तदङ्कनेन संस्कृतगात्राः, पाप्मानमरातिं = पापरूपं शत्रुं अतितरेम = अतिक्रम्य वर्तामह इति।

एवमेव त्रिष्वपि वेदेषु पठ्यमाना श्रुति :-

"पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः।
अतप्ततनूर्नतदामोश्नुते स्तृता स इद्वहन्तस्तत्समाशत" ॥ इति॥

तथा कठशाखायां श्रूयते :-

"धृतोर्ध्वपुण्ड्रः धृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा।
स्वरेण मन्त्रेण सदा हृदि स्थितं परात्परं यन्महतो महान्तम् ॥
इति ॥

तथाऽथर्वणोपनिषदि ब्रह्मसूक्ते श्रूयते :-

"दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम्।
सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः ॥" इति ॥

तथा ऋग्वेदे खिलभागे श्रूयते :-

"चक्रं बिभर्ति वपुषाऽभितप्तं बलं देवानाममृतस्य विष्णोः।
स एति नाकं दुरितं विधूय प्रयान्ति यद्यतयो वीतरागा ॥
इति ॥

विद्यारण्यः :- ननु चरणं पवित्रमित्यादौ चरणपवित्रशब्दयोः सुदर्शन - चक्रपरत्वे प्रमाणं नास्तीति चेत्

अक्षोभ्यतीर्था :- न "सुदर्शने च दर्भे च पवित्रं शणसूत्रके" इति वेदनिघण्टौ, "सुदर्शनं सहस्रारं पवित्रं चरणं पविः" इति निरुक्ते, "पवित्रं चरणं चक्रं लोकोद्धारं सुदर्शनम् ॥ पर्यायवाचकाह्येते चक्रस्य परमात्मनः" ॥ इति श्रीशास्त्रे (पाञ्चरात्रागमे)

"पवित्रं चरणं नेमिररिश्चक्रं सुदर्शनम्।

सहस्रारं प्राकृतघ्नं लोकोद्धारं महौजसम् ॥
नामानि विष्णुचक्रस्य पर्यायेण निबोध मे ॥'' इति पाद्मे च सुदर्शनपर्यायत्वकथनात् ॥

विद्यारण्य :- ननु ''चरणं पवित्रमित्यादिश्रुतेः'' अपाघेष्ठौ विनियोगात् न तप्तसुदर्शनधारणविधौ तात्पर्यमिति चेत्

अक्षोभ्यतीर्था :- न। यतोहि न वयं तस्य प्रमाणसिद्धविनियोगं व्यासेधामः।
किन्तु – ''विष्णोर्नुकेति''मन्त्रेण तापयित्वा सुदर्शनं।
चरणं पवित्रमिति तद्द्वाभ्यामभिमन्त्रयेत् ॥
पवित्रं ते विततमिति मुद्रयेद्दक्षिणे भुजे।
ज्ञानं वैराग्यमास्तिक्यं श्रद्धा ह्यस्याभिवर्द्धते ॥
इति महर्षिणा सनकेन विनियुक्तत्वात्तत्परत्वमाश्रयामः ॥

विद्यारण्य :- ननु चरणश्रुतेः सदाचारपरत्वेन व्याख्यातुं शक्यत्वेन न सुदर्शनाद्यर्थपरत्वमिति चेत् ॥

अक्षोभ्यतीर्था :- न। तस्मिन्प्रकरणे ''तच्चरणमब्रवीत् प्रजायते चरणेन वै श्राम्यसि अहं वै चरणमस्मीति'' वक्तृत्वलिङ्गाच्चरणशब्दार्थस्य चेतनत्वचरणनामधेयत्वदेवतात्वानां स्पष्टमुक्तत्वात् भट्टभास्करेणापि ''चरणमधिदेवतेति'' व्याख्यातम्। अतस्तद्देवताभिमन्यमानविष्णु चक्रवाचित्वस्यैवाभ्यपगन्तव्यत्वात्। सुस्पष्टं श्रुत्यन्तराणां दर्शितत्वात्, तदर्थपराणां च स्मृतिपुराणादिवाक्यानां सहस्रशः सद्भावाच्च। तथाहि पाद्मे :-

सर्वाश्रमेश्रु वसतां ब्राह्मणानां विशेषतः।
विधिना वैष्णवं चक्रं धार्यं हि श्रुतिचोदनात् ॥ इति ॥

तथा

दक्षिणे तु भुजे विप्रो बिभ्रियाद्वै सुदर्शनम् ।
सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः ॥
एवं महोपनिषदि प्रोक्तं चक्रादिधारणम् ।
तथैव सामयजुषि ऋचि प्रोक्तं शुभानने ॥ इत्यादीनि ॥

''न लोहितं कुर्यादिति'' श्रुतिरपि विहिततप्तचक्राद्यङ्कनातिरिक्तलोहितनिषेधपरा। सामान्यनिषेधस्य विशिष्यविहितेतरपरताया ''मा हिंस्यात् सर्वा भूतानि'' इत्यादौ दृष्टत्वात्। अत एव

''शङ्खचक्राद्यङ्कनं च नृत्तगीतादिकं तथा ।
एकजातेरयं धर्मो न जातु स्यात् द्विजन्मनः ॥''

इत्यादेः शङ्खचक्राङ्कनादिनिषेधपरवाक्यस्य, ''एकजातेः = शूद्रस्य सकाशात् शङ्खचक्राद्यङ्कनं नृत्तगीतादि च गृह्यमाणं न जातु धर्मो भवति। किन्तु द्विजन्मनः सकाशादेव शङ्ख चक्रादिकं ग्राह्यमित्यादिरर्थः पूर्वोक्तश्रुत्यविरुद्धो बोद्धव्यः ॥

यथा स्मशानजं काष्ठमनर्हं सर्वकर्मसु ।
तथा चक्राङ्कितो विप्रः सर्वकर्मसु गर्हितः ॥
शङ्खंचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा ।
स शूद्रवद् बहिष्कार्यः सर्वस्मात् द्विजकर्मणः ॥

इत्यादिकं च आयसेन, स्वयमेव वा शङ्खचक्रादिकं यो बिभर्ति न तु सुवर्णरजतताम्रकांस्यान्यतमेन नाप्याचार्यमुखेन तस्य धारणस्याकृतसमत्वेन द्विजकर्मस्वनधिकारात्तद्बहिष्करणपरं

ध्येयम् ॥ तदुक्तं :-

सुदर्शनं पाञ्चजन्यं सौवर्णेन प्रकारयेत् ।
रौप्येण वापि ताम्रेण कांस्येनापि प्रकारयेत् ॥
आचार्यादनभिप्राप्तः प्राप्तो वा भूरिदक्षिणम् ।
अङ्गोपाङ्गैश्च संयुक्तो कृतोऽपि न कृतो भवेत् ॥ इत्यादौ ॥

(अत्राधिकमक्षोभ्यतीर्थसम्मतं पाञ्चरात्राद्यागमप्रमाणपूर्व-मीमांसान्यायसञ्चरणादिकं श्रीविजयीन्द्रतीर्थकृतचक्रमीमांसायां तथा श्रीवादिराजश्रीमच्चरणकृतयुक्तिमल्लिकायां च द्रष्टव्यम्)

विद्यारण्यः :- ननु स्यादेतदेवं यदि वेदशास्त्रादेः विष्णुसर्वोत्तमत्व एव तात्पर्यं स्यात् । तदा वैष्णवसदाचरणपुराणादीनां वैदिकत्वमत एव प्रामाण्यम् । भस्मधारणाद्यवैष्णवाचरणतद्बोधकपुराणादीनाम वैकित्वमप्रामाण्यमित्यादि । परन्तु ''तत्त्वमसि'' ''ब्रह्म वेद ब्रह्मैव भवति'' इत्यादि महावाक्यपर्यालोचनेन समस्तवेद-शास्त्रादेरद्वैते तात्पर्यं सिद्ध्यति । तस्माद्द्वैतमेव वैदिकम् । तद्बोधकपौरुषेयाणां तत्वावेदकत्वम् । द्वैतपराणां च पुराणादी-नामतत्वावेदकत्वमिति वैष्णवाचरणादिकं चावैदिकमेवेति चेद्

अक्षोभ्यतीर्थाः :- न । अद्वैतस्यैवाप्रामाणिकत्वात् । ''तत्त्वमस्यादि''वाक्यानां चाद्वैते तात्पर्यं च दूरतोऽपास्तम् । तथा हि । तत्पदत्वंपदयोरद्वैते शक्ति - प्रसिद्धलक्षणान्यतरवृत्यभावाज्जहदजहल्लक्षणावृत्तेश्चा-प्रामाणिकत्वात् तद्वाक्यस्याद्वैतबोधकत्वेऽन्तरङ्गविरोधः । एवं बहिरङ्गविरोधश्च । अद्वैतमेव यदि तत्वं स्यात्तदा द्वैतस्य मिथ्यात्वमङ्गीकार्यम् । बाढमिति चेद् ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वे च द्वैतसापेक्षविषयाद्यनुपपत्त्या सर्वं शास्त्रमनारम्भ-

णीयं स्यात्। कल्पिताविद्याद्यवलम्बनेन विषयाद्युपपादनं तु आत्माअन्योन्य - चक्रकाश्रयण - अनवस्थादूषणग्रस्तमित्यनुपपन्नम्। ब्रह्मातिरिक्तस्य सर्वस्य द्वैतप्रपञ्चस्य मिथ्यात्वे च सर्वान्तर्गततत्त्वमस्यादिवाक्यानामपि प्रथमतो मिथ्यात्वप्रसक्त्या अप्रामाण्यात् तद्वाक्येनाद्वैतसिद्धिरेव न स्यात्। न ह्यनुपपात्यादिदोषग्रस्तं न वा तादृशार्थप्रतिपादकं शास्त्रवाक्यं ''मूकोऽहमि''त्यादिवाक्यमिव प्रमाणं भवति। तस्मात् तत्त्वमस्यादिवाक्यानां द्वैतपरशकुनि सूत्रादिदृष्टान्तानुगुण्येन तत्रैव पूर्वोत्तरप्रसक्तविषयावलोकनेन च स्पष्टद्वैतपरश्रुत्यविरोधाय च ''अतत् त्वमसि'' इति पदच्छेदमाश्रित्य तत्पदार्थभूतसर्वज्ञसर्वेश्वरपरब्रह्मभिन्नः त्वं पदार्थो जीवः सार्वकालिकसत्तावानितिवाक्यार्थोऽङ्गीकार्यः। तथा च नाद्वैते कश्चिदागमः।

अथवा 'तदिति' पदावलम्बेऽपि ''सिंहो देवदत्त'' इत्यत्र सिंहशब्दस्येव तत्पदस्यापि तत्सादृश्यार्थे गौणीं वृत्तिं समाश्रित्य तत्पदार्थभूतपरमात्मसदृशो त्वंपदार्थः जीव इति वाक्यार्थोऽङ्गीकार्यः। एवञ्च सादृश्यस्य भेदावलम्बित्वान्नाद्वैतसिद्धिः।

विद्यारण्यः :- ननु परमात्मसादृश्यं च जीवस्य सर्वज्ञत्वसर्वेश्वरत्वादिरूपेणानुपपन्नमिति चेतनत्वेनैव वक्तव्यम्। चेतनत्वाभिव्यङ्ग्यसादृश्यस्य पूर्वमेव सिद्धत्वात् तद्बोधकवेदवाक्यस्य ज्ञातार्थज्ञापकत्वेनानुवादकत्वात् शास्त्रत्वभङ्गापत्तिरिति न सादृश्यबोधकमिदं वाक्यमिति चेत्

अक्षोभ्यतीर्थाः :- न। निर्दुःखत्वेन ज्ञानानन्दादिस्वरूपत्वेन पुनःसृष्टिलयादिरहितत्वेन च सादृश्यस्य विवक्षितत्वात्। तादृशसादृश्यस्य

पूर्वमसिद्धत्वात् तद्बोधकवेदराशेर्न ज्ञातार्थज्ञापकत्वमिति न शास्त्रत्वभङ्गः। न चैतत्साद‍ृश्यमप्रमाणिकम्। "निरञ्जनः परमं साम्यमुपैति" "मम साधर्म्यमागताः" इत्यादि श्रुतिस्मृति-प्रमाणकत्वात्। साम्ये परमत्वं च निर्दुःखत्वाद्यभिव्यङ्ग्यत्वरूपं निरञ्जनपदसमभिव्याहारगम्यम्। अभेदवादिनां भेदश्रुति-विरोधादिश्च दुर्वारः ॥

विद्यारण्यः :- ननु व्यवहारदशायां भेदस्य परमार्थतस्त्वभेदस्य चाभ्युपगमान्न विरधः। अत एव न कर्मोपासनाकाण्डयोर्वैयर्थ्यम्। न हि सर्वेप्युत्पत्तिकालमारभ्य वामदेवादिवदात्मज्ञाः। किन्तु कर्मो-पासनादिभिः शुद्धान्तःकरणानां देहपातानन्तरं ब्रह्मभाव इति नास्माकं भेदश्रुतिविरोधः। किन्तु तवैवाद्वैतश्रुतिविरोधः कण्ठे गडुरिति चेद्

अक्षोभ्यतीर्थाः :- न। भेदस्य त्वन्मते व्यावहारिकत्वं नाम कल्पितत्वमित्येव वक्तव्यम्। अकल्पितत्त्वे चापसिद्धान्तापातात्। तथा च कल्पितभेदबोधकानां कर्मोपासनाकाण्डादीनामप्रामाण्यापातः। "नेह नानेति" निषेधाय कल्पितभेदानुवादपराणां भेदश्रुतीनामभेदे तात्पर्यान्नाप्रामाण्यमिति तु न सम्यक्। कर्मोपासनादीनां वेदेतरप्रमाणासिद्धत्वात्। तद्बोधकानां भेदश्रुतीनामनुवादकत्वायोगात्। वेदः जीवानां बुद्धावविद्यमानं कर्मोपासनादिकं स्वयं प्रकल्प्य निषेधतीत्युक्ते उन्मत्तप्रलापायि-तत्वं वेदस्य स्यादिति कर्मादिबोधकश्रुतीनामननुवादकत्वाद-कल्पितकर्मादिपरत्वमेवाङ्गीकार्यम्। ततश्चाकल्पितभेदश्रुति-विरोधः पारमार्थिकाभेदवादिनस्तवैव कण्ठे गडुरित्यवेहि। पूर्वोक्तरीत्यान्तरङ्गबहिरङ्गप्रमाणविरोधादिनाऽद्वैतपरश्रुते-

रेवाभावाद्भेदवादिनां कास्त्यद्वैतश्रुतिविरोधः। अतत्त्वमसीति छित्वा दृष्टन्ताद्यनुसारेण श्रुत्यर्थे गृहीते च स्पष्टं जीवब्रह्म-भेदबोधनात् न 'ब्रह्मात्मैक्यं सिद्ध्यतीति तत्वमसीति महा वाक्यविचारोऽद्वैतिकण्ठकुठार एव इति। तस्मात्पूर्वोदाहृत श्रुतिस्मृतिप्रमाणानुरोधेन विष्णुसर्वोत्तमत्वादिकं तनुसारि-वैष्णवाचरणादेर्वैदिकत्वं अवैष्णवाचरणादेरवैदिकत्वं सिद्ध्यति।

इत्यादिरीत्या समयबन्धानुसारेण लेखननियमबद्धं प्रवर्तितेऽस्मिन् चतुस्तन्त्रमये वाग्युद्धे तदानीं तदीयसूक्ष्मतरविचारधारणाऽसमर्थ बुद्धिभिः राजादिभिस्तयोर्जयपराजयनिर्णयाय प्रार्थितेन तदानीन्तनेन विद्वद्वरेण रामानुजीयेन वेदान्तदेशिकाचार्येण नियोजकैः प्रेषितं यथावल्लिखितमामूलाग्रं समालोच्य निर्णायकं वाक्यमेवमाघोषि। तथा विलिख्य प्रेषितं च :-

असिना तत्वमसिना परजीवप्रभेदिना।
विद्यारण्यं महारण्यमक्षोभ्यमुनिरच्छिनत्॥ इति॥

अक्षोभ्यतीर्थमुनिः परवस्तुनारायणाजीवयोः प्रभेदिना = आत्यन्तिक पारमार्थिकभेदबोधकेन तत्वमसिना = तत्वमसीतिमहावाक्यरूपेण असिना = खड्गेन महारण्यं = रणेभावः रण्यः योद्धा महांश्चासौ रण्यश्चात्यन्तबलिष्ठः इतरदुर्जयो यो योद्धा तादृशं विद्यारण्यं अच्छिनत् = चिच्छेद। विद्यारण्ये दुर्जयत्वोक्तिस्तज्जेतरि श्रीमदक्षोभ्यतीर्थे संक्रामति। तथोक्तं नीतिशास्त्रे।

शत्रुं सर्वगुणोपेतमुक्त्वा तज्जयकीर्तनात्।
तज्जेतरि गुणाः सर्वे संक्रामन्ति जितेन हि॥ इति॥

राजा च विद्वद्वरिष्ठश्रेष्ठप्रेष्ठप्रजासमक्षं संप्राप्तमिदं विद्यारण्यपराजयख्यापकं श्रीमदक्षोभ्यतीर्थविजयसंस्थापकं सालङ्कारं सुन्दरं सुदृढं साभिप्रायं बहुगम्भीरं सूत्रप्रायं श्लोकरत्नं बृहति शिलास्तम्बे शासनरूपेण निबध्य ''मुळबागिलु'' पुरसमीपस्थस्य

पर्वतस्य ध्वजायमानं . आचन्द्रार्कस्थायिनं श्रीमदक्षोभ्यतीर्थविजयस्तम्भं संस्थापयामास। दशदिक्षु समघोषयच्च श्रीमध्वसिद्धान्तविजयम्। सर्वत्र देशे सज्जनैर्हरिगुरुभक्तिभावभरितैः सोत्साहं सानन्दं सवैभवातिशयं समाचरितश्च श्रीमध्वसिद्धान्तविजयमहोत्सवः।

दुरहंकारी विद्यारण्यः समवाप्तपराजयः श्रीमदक्षोभ्यतीर्थश्रीमच्चरणानां पुरतः साञ्जलिबन्धोऽवनतकन्धरो मलिनायितावाङ्मुख अन्तरेव महद्दुःखमनुबभूव। अत एवैतत्सर्वं संङ्गृह्योक्तं मध्वस्तुतौ :-

दौर्बल्यं साङ्करीये शिथिलकुसमये विक्ष्यकीर्त्यैककामी विद्यारण्योन्यदीयानययुतविवृतिग्रन्थकृत्याप्तगर्वी॥ दुर्मन्त्रेष्वग्रगण्यः सुखमुनिसमयं जेतुकामोप्यवाप्तच्छेदो ह्यक्षोभ्यतीर्थैर्विलपति विजयस्तम्भभूमावधस्तात्॥

एवं क्रि. श. 1387 वर्षपर्यन्तं जीवितस्य विद्यारण्यस्य क्रि.श. 1331 तमे वर्षे एव सन्यासो विद्यारण्येति नाम चासीदिति पूर्वमितिहासावलोकनेनोपपादितत्वाद् क्रि.श. 1350 वर्षतः 1365 वर्षावधिकालमध्ये प्रवृत्ते एतद्वाग्युद्धावसरे विद्यारण्यपराजय - श्रीमदक्षोभ्यतीर्थविजयनिर्णयसमुद्धोषणपरे वेदान्तदेशिककृते शिलाशासनोल्लिखितश्लोके विद्यारण्येति नामघटितत्वमन्त्यन्तं सूपपन्नम्।

एतेन मा. मञ्जर्यां यदुक्तं "तदानीं विद्यारण्येति नामाभावादेव असिना तत्वमसिनेत्यादिवचनमाधुनिकेन केनचित्कल्पितमिति तदपाकृतं वेदितव्यम्, अक्षोभ्यतीर्थचरित्रप्रतिपादकप्राचीनग्रन्थेषु श्लोकस्यास्य अत एव वादविषयस्यपि स्पष्टमुपलम्भात्।

अत्र अस्तु वा मध्यस्थोक्तिरियमिति पक्षमवलम्ब्य "नेदं पद्यं विद्यारण्यपराभवमभिधत्ते। किन्तु विद्यारण्यकर्तृकाक्षोभ्यकर्मकजयम्। तथाहि। असिनेति श्लोके अक्षोभ्यं उ निराच्छिनदिति पदच्छेदः। तदर्थस्तु अपरजीवप्रभेदिना

अविद्यमानपरजीवप्रभेदविशिष्टेन = जीवब्रह्मभेदाप्रतिपाकेन लक्षणावृत्त्या जीवब्रह्मैक्यप्रतिपादकेनेति यावत्। तत्वमसिना असिना = करणेन हे विद्यारण्य भवान् महारण्यमिव दुरासदं अक्षोभ्यं उ = उः अवधारणे। अक्षोभ्यमेव निरच्छिनत् = नितरां चिच्छेद इति'' परेण यदुक्तं तत्सर्वं परस्य स्वान्तस्थासहनासूयादिदोषोद्गिरणमात्रम्।

तथाहि। कुतोऽयमपार्थीकरणप्रयासः ? वाक्यार्थे विद्यारण्यदौर्बल्यस्याक्षोभ्यतीर्थमुनेः प्राबल्यस्य च प्रदर्शितत्वात्। यथास्थितार्थ एव परिगृह्यताम्। निर्निमित्तमपार्थकरणं सर्वत्र सुलभमिति न कापि विषयव्यवस्था सिद्ध्येत्।

किञ्च त्वदुक्तरीत्यैतच्छासनं विद्यारण्यविजयाक्षोभ्यतीर्थपराजयोद्घोषणपरं यदि स्यात्तदा तच्छासनं तावत्कालमारभ्याद्वैतिजनवशवर्त्येव स्यात्। न तु माध्वजनवशवर्ति। तेन ज्ञायते तच्छासनं विद्यारण्यपराजयाक्षोभ्यतीर्थविजयघोषणात्मकमेव। अत एव माध्वजनवशवर्ति माध्वजनताऽदरणपात्रमद्यापि विराजते।

किञ्च वेदान्तेशिकवैभवग्रन्थे च ''तत्वमसिना तं विद्यारण्यं मुनिस्तदा। अक्षोभ्य आच्छिनदिति अवदत् यः तं सेवे'' इति एतच्छलोककृत वेदान्तदेशिकाचार्यस्याभिप्रायो विद्यारण्यकर्मकाक्षोभ्यतीर्थकर्तृकजयविषयकः स्पष्टं सम्प्रदर्शितः। तथा मैसूरुसर्वकारेणाऽपि गेजेट् नामके नियमनिबन्धप्रबन्धे एतच्छिलाशासनं विद्यारण्यपराजयाक्षोभ्यमुनिविजयपरतयाऽङ्गीकृत्य निबद्धमिति बहिरङ्गप्रमाणविरोधो मा. मञ्जरीकारकृतापार्थकरणप्रयासस्य।

तथाऽन्तरङ्गविरोधश्च।

असिना तत्वमसिना परजीवप्रभेदिना।
विद्यारण्यं महारण्यमक्षोभ्यमुनिरच्छिनत्॥

इति हि श्लोको वर्तते। अत्र विद्यारण्यमितिद्वितीयान्ततया निर्देशः वर्तते। न तु

द्वितीयाविभक्त्यनन्ततया। अतो विद्यारण्येति सम्बुद्ध्यन्ततया पदच्छेदस्यावकाश एव नास्ति। तस्माद् विद्यारण्येति सम्बुद्ध्यन्तं प्रकल्प्यापार्थकरणप्रयत्नस्य परकीयस्य दृष्टपरित्यागाददृष्टकल्पने स्याताम्। विद्यारण्येति पाठेऽपि विद्यारण्यापृष्टेन वेदान्तदेशिकेन तत्साम्बोधनानुपपत्तिः। अपरजीवप्रभेदिना इति पदविभागमाश्रित्य जीवब्रह्मैक्यप्रतिपादकेनेत्यर्थकरणं चात्यन्तविरुद्धम्। तत्त्वमसीति वाक्यस्य असिशब्दार्थखड्गरूपत्वमुक्तम्। असेश्च प्रभेदात्मकच्छेदसाधनत्वं प्रसिद्धम्। न त्वभेदात्मकैक्यसाधनत्वम्। तथा च तत्वमसीति वाक्यस्यासिरूपकत्वं वदतः श्लोककृतः परजीवप्रभेदसाधनत्वेनैव सादृश्यमभिप्रेतमिति परकृतस्याभेदसाधनत्व-रूपार्थस्य विरोधः॥

किञ्च अच्छिनदित्युक्त छेदं प्रति करणत्वेन गृहीतस्यासेः परजीव-प्रभेदनसामर्थ्यसंसूचनमनेन विशेषणेन समुद्दिष्टम्। अपरजीवप्रभेदिनेति पद-विभागाश्रयणे तूद्देशभङ्ग इत्यस्वारस्यम्।

किञ्च वैदिके 'उ' इत्येकाक्षरस्यावधारणार्थे प्रयोगे सत्यपि लौकिके क्वापि तादृशार्थे प्रयोगो न दृष्टः। ''उकारः क्षत्रिये नेत्रे हरमौलौ हरे हरौ इति हि कोशोऽर्थान्तरे प्रसिद्धः। तस्माल्लौकिकेऽस्मिन् श्लोकेऽवधारणार्थे 'उ' इति च्छेदो निर्मूल एव।

निरच्छिनदित्यत्रापि ''निर्युक्तिकं'' निर्मक्षिकं निरवद्यमित्यादाविव निषेधार्थकनिरित्युपसर्गसमाश्रयणेन न चिच्छेद इत्यप्यर्थसम्भवान्निर्निमित्तमपार्थी-करणक्रमः परकीयशिरसो विच्छेदक एव। तस्मादुक्तान्तरङ्ग बहिरङ्ग-विरोधसद्भावान्मा-मञ्जरीकारेण कृतमेतच्छ्लोकस्यापार्थीकरणं ''दश रामशराः पेतु'' रित्यस्य वाक्यस्य दशरा, मशराः पेतुरित्यपार्थकरणमिव तदीयदुराग्रह-दौर्जन्यदुर्बुद्ध्यादिदोषप्रकाशनकारणमिति सुधियो विभावयन्त्येव॥

एवं वाक्यार्थपर्यालोचनेन चाद्वैतादिमतस्य तदीयाचारादेश्च वेदशास्त्रभारत

भगवद्गीतादिषु न काप्यवकाशोऽस्तीति अप्रामाणिकस्य तन्मतस्य सर्वदा पराजयः तथा मध्वसिद्धान्तस्य सर्वदा सर्वत्र विजय एवेति प्रेक्षावद्भिर्विज्ञायते। ततः परमात्मजीवात्मनोरत्यन्ताबाधितभेदनिश्चयसाधनभूतेन तत्वमसीतिवाक्यरूपेण असिना करणेनास्मिन् वाग्युद्धे महायोद्धारं विद्यारण्यमक्षोभ्यमुनिरच्छिनत् = चिच्छेद इत्येव स्वरससुन्दरः साभिप्रायः श्लोकार्थः।

इत्थं तदा तत्त्वमसीति वज्रेणैक्यप्रभेदेऽतिमहत्वभाजा।
अक्षोभ्यतीर्थाभिधदैवतेन्द्रः चिच्छेद विद्यावनदानवेन्द्रम्॥

अक्षोभ्यतीर्थो यतिराट् कुविद्यारण्यादिमान् सर्वखलाग्रगण्यान्। विजित्य माध्वेतरदुर्मतं सञ्छिन्दन् सुमाध्वं मतमाररक्ष॥ सर्वमिदं हृदि निधाय श्रीमज्जयतीर्थ श्रीमच्चरणैः स्वगुरून् श्रीमदक्षोभ्यतीर्थमुनीन् अधिकृत्यैवमुक्तम् :-

श्रीमद्रमारमणसद्गिरिपादसङ्गिव्याख्यानिनाददलिताखिलदुष्टदर्पम्।
दुर्वादिवारण विदारणदक्षदीक्षमक्षोभ्यतीर्थमृगराजमहं नमामि॥ इति॥

विद्यारण्यस्योत्तरावस्थासङ्ग्रहः

ततश्च दुःखातिशयेन विद्यारण्योऽपि जीवन् कुजनाग्रगण्यः।
अक्षोभ्यतीर्थार्यसमर्थशिष्यं श्रीमज्जयार्यं समगाज्जिगीषुः॥

बालोप्यबालाऽमलधीबलोऽयं जयार्यसिंहः स्वनयैर्नखाग्रैः।
विदार्यविद्यावनवारणेन्द्रं न्यधात्पदं स्वं खलमस्तकेषु॥

वेदान्तराज्यावनचक्रवर्तिश्रीमज्जयार्यैः समवाप्तभङ्गः।
हृद्रोगतोऽगाच्छरणं सविद्यारण्योऽतिरोधी मरणं स्ववार्धौ॥

इतः परं प्रवृत्ते विद्यारण्यचरित्रवर्णनपरे मा. मञ्जरी ग्रन्थेऽनुपपन्नत्वादिकं प्रदर्श्यते। तथाहि। विद्यारण्यस्य भुवनेश्वरीविद्याजपादिना संसिद्धिप्राप्तिः देव्या अनुग्रहः नृगतपापाद्रिदाहप्रदर्शनं, एतज्जन्मनि धनमदेन ब्रह्मविस्मृतिसम्भावना,

भविष्यज्जन्मन्यपि धनमत्तताभयेन सन्यासग्रहणेच्छैवमादिकं वर्णितम्।

तदेतदनुपपन्नम्। पूर्वं सर्वोत्तमपरमेश्वरावतारत्वेनाङ्गीकृतस्य विद्यारण्यस्य त्वद्रीत्या तदवरभूताया भुवनेश्वरीदेव्याः सेवनं तदनुग्रहादिसम्पादनं कथं घटते?। धनमत्तता, ब्रह्मविस्मृति, जन्मबन्धनप्रभृतिदोषसम्बन्धार्हस्य तस्य कथं निर्दोषत्वेनाङ्गीकृतपरमेश्वरावतारत्वं स्यात् ? सन्यासस्यापि जन्मान्तरत्वात् तत्स्वीकारेण कथं धनमत्तता निवृत्ता स्यात् ? सन्यासाश्रमिणोऽपि त्वदीयसङ्करस्य त्वयैव पुनर्विद्यारण्यादिरूपेण जन्माङ्गीकारात् "सन्यासाश्रमस्य मोक्षसाधनत्वेन भविष्यज्जन्माभावादिति" वर्णनं कथं सङ्गच्छते?। अतः सन्यासानन्तरं धनमदेनैव विद्यारण्यः श्रीमध्वसिद्धान्तविध्वंसनाय प्रवृत्तः स्वयं विध्वंसनमवाप श्रीमदक्षोभ्यतीर्थ श्रीमच्चरणैरित्येव युक्तम्।

किञ्च पूर्वं मा. मञ्जर्यामेकपञ्चाशदधिकशतसंख्याकपुटे (१५१) १२५७ संख्याके शा. शकीययुवाब्दे विद्यारण्यस्य क्रमसन्यास इत्युक्तत्वा उत्तरत्र १५५ संख्याके पुटे १२५० संख्याके शा. शकीयविभवसंवत्सरे क्रमसंन्यास इत्युच्यत इत्यसाङ्गत्यं स्फुटम्।

किञ्च त्वत्कल्पितस्य शृङ्गिभट्टस्य ब्रह्मरक्षस्त्वप्रापितन्निवृत्तिवर्णनप्रसङ्गे त्रिवारं व्यासदर्शनं विद्यारण्येन सह शृङ्गिभट्टस्य समुपवर्ण्य "चतुर्थं तु विद्यारण्यमुनेर्द्वितीयावतारे सेत्स्यतीत्यैतिह्यमिति" कथनेन भविष्यज्जन्माङ्गीकृतम्। पूर्वं विद्यारण्यस्य भविष्यज्जन्माभावाय सन्यासस्वीकार इत्युक्तमिति पूर्वोत्तरासाङ्गत्यं सुस्पष्टम्।

माध्वीयपरम्परायां श्रीमद्वादिराजतीर्थश्रीचरणचरित्रप्रसिद्धां "आ - का - मा - वै को न स्नातेति" प्रश्नस्य ब्रह्मराक्षसकृतस्य "रण्डापुत्रस्त्वं न स्नाताः" इति सरहस्यं प्रत्युत्तरयतां श्रीवादिराजतीर्थस्वामिनां चरणनलिनयोर्दासभावमापन्नस्य भूतराजस्य कथामिव काञ्चन कथां विद्यारण्यचरित्रे संयोज्य वर्णयन्त्यां मा. मञ्जर्यां

बदरिकाश्रमस्थितव्यासस्थित्यवलोकनादौ शृङ्गिभट्टाख्यब्रह्मराक्षसं प्रति "हे महात्मन् ! मम व्यासस्थितिं दर्शयेति" सदैन्यं प्रार्थनामयवचःप्रयोक्ता तद्ब्रह्मराक्षसप्रतिष्ठापनपूजनादिकर्ता च विद्यारण्यः स्वयं स्वस्य ब्रह्मराक्षसदास्यमाविश्चकारेत्यहो। पूर्वमुक्तं भूताधिपेश्वरावतारत्वं विद्यारण्यस्य साधु समर्थितम्।

शृङ्गिभट्टब्राह्मणकथाप्ययुक्ता। प्रसिद्धप्रमाणेष्वनुपलम्भात्। श्रीरामचन्द्रस्य राज्यशासनकाले समस्तदुर्दानपरिग्रहणेन श्रीरामध्यानादिरूपप्रायश्चित्ताऽकरणेन च शृङ्गिभट्टस्य ब्रह्मराक्षसत्वप्राप्तिः वर्णिता। साऽयुक्ता। श्रीरामराज्ये "नावैष्णवो न दरिद्रो बभूव" इति हि प्रमाणम् (साधनशून्यत्वं दरिद्रत्वं)। तथा च सर्वोऽपि ब्राह्मणादिर्विष्णुभक्तपरायणः समाश्रितमोक्षसाधनश्चासीदिति ज्ञायते। अयं च त्वत्कल्पितो ब्राह्मणः शृङ्गिभट्टो रामराज्यकालेऽवैष्णवश्चेद्दैत्य एवेति तस्य ब्रह्मराक्षसत्वं, तादृशदुष्टभूतवशित्वं च विद्यारण्यस्येति तदवलम्बितमाहात्म्यस्य विद्यारण्यस्यापि महातामसत्वमेवोररीकृतं भवति। वैष्णवश्चेत्स साधक एवेति ब्रह्मराक्षसत्वमनुपपन्नम्।

शुनः पाषाणखण्डेन ताडनादिरूपं किञ्चिद्व्यर्थकर्म कुर्वतोऽपि द्विजस्य तत्कालं निर्णयपूर्वं शिक्षां विदधतो श्रीरामचन्द्रस्य शासनकाले तत्पुरत एवैतादृशमहतो दोषिणो द्विजस्य सद्भावो वाङ्मनोविदूरः।

दुष्प्रतिग्रहस्य ब्रह्मराक्षसजन्मापादकत्वं चासिद्धम्। उत्तरत्र "आ - का - मा - वै - को न स्नातेति" प्रश्नोत्तरसन्दर्भे आषाढ - कार्तिक - माघ - वैशाख पूर्णिमासु भवानुषः काले न स्नातवानिति वर्णनेनाकृतैतादृशपूर्णिमास्नानत्वमेव ब्रह्मराक्षसत्वहेतुरिति ज्ञापितं भवति। सति चैवं पूर्वं दुष्प्रतिग्रहहेतुकत्वोक्तिरनुपपन्ना।

व्याससन्दर्शनस्य तदीयब्रह्मरक्षस्त्वनिवृत्तिहेतुत्वमप्यप्रामाणिकम्। विद्यारण्यस्यापि स्वसामर्थ्येनैव चतुर्वारं व्याससन्दर्शनमुपकल्पयतो तादृशब्रह्मराक्षसस्य

शृङ्गिभट्टस्य विद्यारण्यकालपर्यन्तं स्वीयब्रह्मराक्षसत्वनिवारकव्याससन्दर्शनं अकृत्वा तूष्णीं संस्थितिः कथमिति चिन्ता दुष्परिहरैव ॥

तस्मान्नैकविधानुपपत्तिकलङ्कितेयं शृङ्गिभट्टकथा न सत्यभूता। किन्तु विद्यारण्यगतपैशाचादि दुर्विद्याप्रभावाच्छादनाय परपरिकल्पितैव भैरव्यादिदुर्विद्या-प्रभावातिशयेन जगद्वशीकरणस्वमहत्वप्रदर्शन - जगद्वञ्चनादिकं तन्मूलगुरु-सङ्कराचार्यमारभ्य तत्कुलपरम्पराप्राप्तमिति नाश्चर्यं विद्यारण्येऽपीति वेदितव्यम्।

शृङ्गिगिरिगतेन विद्यारण्येन (सायनमाधवेन) स्वगुरोर्भारतीतीर्थस्य पुरतः कृतमिति यदुक्तं "तत्तु समन्वयादिति" ब्रह्मसूत्रार्थानुवादनं तद्विचार्यते।

"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि"ति जैमिनिसूत्रमाश्रित्यैवं पूर्वपक्षः – कर्माङ्गभूतकर्तृदेवताद्रव्यादिप्रतिपाकानां वेदवाक्यानां साक्षात्कर्मप्रति-पादकवाक्यानां च क्रियैव मुख्यप्रतिपाद्योऽर्थः। न तु सिद्धं ब्रह्म। सिद्धार्थबोधने तु वेदानां निष्प्रयोजनत्वं स्यात्। तस्मादुपासनादिक्रियाङ्गतयैव सिद्धं ब्रह्मादि वेदप्रतिपाद्यम्। ततो ब्रह्म श्रुतीनां न मुख्यार्थः। कर्मैव मुख्यार्थः। तद्बोधनेन वेदवाक्यानां प्रवृत्त्यादिफलवत्त्वरूपसार्थक्यसम्भवादिति।

सिद्धान्तस्तु उपनिषदां उपसनाङ्गब्रह्मनिरूपणेन श्रुतित्वेऽङ्गीकृते क्रियाङ्ग-कर्त्रादीनामनित्यत्वमिवात्मनोऽप्यनित्यत्वप्रसक्त्या, उपासनाभेदेन तल्लभ्यविमुक्तौ तारतम्यभेदादिप्रसक्तेश्चात्मनित्यत्व - निर्भेदमुक्त्याद्युपपत्तये चोपनिषदां साक्षाद्ब्रह्मस्वरूपबोधकत्वेनैव श्रुतित्वम्। न तु कर्माङ्गतया। तथा च कर्मकाण्डस्य वेदस्य क्रियैव (कर्मैव) मुख्यार्थः। ब्रह्मकाण्डस्योपनिषदात्मकवेदान्तस्य ब्रह्मैव मुख्यार्थ इत्येतद्बोधकं पारमर्ष सूत्रं "तत्तु समन्वयात्" इति। तदर्थस्तु समन्वयात् = श्रुतिमस्तकानामात्मनि तात्पर्यनिर्णायकलिङ्गषट्कसम्बन्धसद्भावात् तत् = ब्रह्मैव (आत्मैव) साक्षादुपनिषद्वेद्यम्। तु शब्दस्तु कर्माङ्गत्वाभावरूपविशेषार्थमाह। न चोपनिषदां सिद्धबोधनेन निष्प्रयोजनत्वमिति शङ्क्यम्। "नायं सर्प" इत्यादाविव ब्रह्मबोधजन्यसर्वानर्थनिवृत्तिरूपफलसद्भावादिति ॥

तत्र पूर्वपक्षस्तावदयुक्तः। तथा हि। "आम्नायस्य क्रियार्थत्वादिति" जैमिनिसूत्रोक्तं क्रियार्थत्वं नाम इष्टत्व - इष्टसाधनत्वान्यतररूपकार्यतार्थत्वमेव। न तु भविष्यत्क्रियादिरूपकर्मार्थत्वम्। येन सिद्धार्थः साक्षाद्वेदार्थो न स्यात्। इष्टसाधनत्वादिरूपं कार्यत्वं क्वचिद्यज्ञादिरूपे कर्मणि सिद्धरूपे ब्रह्मणि च सूपपन्नमिति सिद्धरूपब्रह्मैव साक्षात्सर्ववेदार्थो भवति। अधिकारिभेदेन भगवद्ब्रह्मैव मुख्यमिष्टमिष्टसाधनं च। तथा चेष्टसाधनरूपार्थप्रतिपाकत्वेनाम्नायस्य सार्थक्यम्। इष्टसाधनाबोधकत्वे हि वेदानां निष्प्रयोजनत्वं स्यात्। वाक्यानां च परार्थत्वादित्येव जैमिनिसूत्रार्थः। तस्य जैमिन्यनभिप्रेतं भविष्यत्कर्मार्थत्वमित्यपार्थं परिकल्प्य मीमांसकंमन्यमाना प्रवृत्ताः। वाक्यानां क्रियाबोधनेनैव निराकांक्षप्रतिपत्तिर्भवति। न सिद्धबोधनेनेति तेषामाशयः। स चायुक्तः। "परिणतिसुरसं पनसफलंमि"त्यादौ वाक्ये व्यभिचारात्। अधिकमाकरे व्यक्तम्।

तन्मतावलम्बनेनापि पूर्वपक्षस्तावदयुक्तः। कर्तृदेवतादेरिव ब्रह्मणो न विधिशेषत्वमस्ति। "आत्मनमुपासीत" इत्यादावात्मज्ञानोद्देशेनोपासनविधेः सत्वा-दुद्देशकोटिप्रविष्टस्यात्मनो न विधिशेषत्वम्। कर्तृकरणदेवतादेश्च नोद्देशकोटि-प्रविष्टत्वमित्यस्ति विधिशेषत्वम्। आत्मनस्तूपासनाकर्मत्वेऽपि उद्देशकोटिप्रविष्टत्वा-समानाधिकरणकर्मत्वाभावान्न विधिशेषत्वम्। उद्देशकोटिप्रविष्टत्वासमानाधि-करणकर्मत्वादिकमेव विधिशेषत्वप्रयोजकमिति मैमांसिकं मतम्। तथा च तन्मतमाश्रित्य न पूर्वपक्षोत्थितिः

सिद्धान्तोऽप्यनुपपन्नः। वेदेषु कर्मकाण्डब्रह्मकाण्डद्वयं प्रकल्प्य कर्मणः कर्मकाण्डवेदभागमुख्यार्थत्वेऽपि ब्रह्मकाण्डात्मकोपनिषन्मुख्यार्थत्वं ब्रह्मण एवेति त्वयुक्तम्। पूर्वोत्तरसूत्रानानुगुण्यात्। युक्तिपराहतेश्च॥ तथाहि "प्रथमसूत्रे ब्रह्मज्ञानार्थं सर्ववेदविचारः कर्तव्यतया प्रसक्तः। अन्यथा सर्वे वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं त्वेकमेव। प्रकाशयन्ते न विरोधः कुतश्चिद्वेदेषु सर्वेषु तथेतिहासे" इति॥ तथा

सर्वे वेदा यत्पदमामनन्ति ..............

तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये ॥ इति ॥

''वेदैश्च सर्वैरहमेव वेद्य'' इत्येवमादिश्रुतिस्मृतिविरोधः। ''शास्त्रयोनित्वात्'' इत्यत्र सर्वं शास्त्रं ब्रह्मणि प्रमाणमित्यभिहितम्। शास्त्रं च ऋगादिकं सर्वम्।

ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम्।

मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥

इत्यादिप्रमाणं शास्त्रशब्दार्थमाह। नोपनिषन्मात्रं शास्त्रम्। मानाभावात्। तथोत्तरत्र ''गतिसामान्यादि''त्यादौ सर्ववेदजन्यज्ञानस्य ब्रह्मरूपमुख्यपदार्थैकविषयकत्वं प्रतिपादितम्। तथा च कर्मकाण्ड ब्रह्मकाण्डात्मकसर्वोऽपि वेदो ब्रह्मण्युपक्रमादितात्पर्यनिर्णायकलिङ्गसम्बन्धवानित्येव सूत्रकाराभिमतम्। न तूपनिषन्मात्रस्य ब्रह्मपरत्वम्। तस्मात्परकृतसिद्धान्तोऽनुपपन्नः ॥

वेदैकदेशाऽमुख्यार्थकर्मादिस्वरूपनिर्णयाय धर्ममीमांसादिशास्त्रस्य सार्थक्यसम्भवात् समस्तवेदमुख्यार्थभूतपरब्रह्मस्वरूपनिर्णयाय ब्रह्ममीमांसाशास्त्रस्य प्रवृत्तिर्युक्ता। ''यत्प्रमाणश्च निर्णय'' इति हि प्रमाणं सर्वशास्त्रोपजीव्यत्वं ब्रह्ममीमांसाशास्त्रस्याह। ''सर्वे वेदा सर्वे घोषा......ओंकारेणैव संतृण्णा'' इति श्रुतिरोंकारार्थपरब्रह्मपरत्वं सर्ववेदानामाह। ''सर्वे वेदा यत्पदमामनन्ति'' ''नामानि सर्वाणि यमाविशन्ति'' इत्यादावामनन्ति आविशन्तीत्यत्र आङापरममुख्यवृत्या सर्ववैदिकशब्दानां ब्रह्मपरत्वमुक्तम्। न तु तात्पर्यमात्रतः। ओंकारमारभ्य सर्ववेदपर्यन्तं विद्यमानो व्याख्यानव्याख्येयभावसम्बन्धश्च सर्ववेदानां ब्रह्मार्थत्वं व्यवस्थापयति। अत उपनिषन्मात्रस्य साक्षाद्ब्रह्मपरत्वसिद्धान्तः शाङ्करीयो न सूत्रकाराभिमतः। अन्यथा ''अथातोपनिषन्मात्रजिज्ञासा'' ''उपनिषद्योनित्वा'' दित्यादि सूत्रनिर्देशः स्यात्। तस्माद्युक्तिविरुद्धश्चायं सिद्धान्तः।

किञ्च त्वद्रीत्या "वेदान्तेन ब्रह्मण्यवगतेऽवगतस्य ब्रह्मणोऽन्यत्र विनियुक्तत्वं नास्तीति न विधिशेषत्वं ब्रह्मणः। ब्रह्मावगतौ सत्यां ब्रह्मेतरसर्वनिवृत्तिरूपफललाभः सम्भवतीति विधेरेवाभावात्। इति वक्तव्यम्। परन्तु स्वप्रकाशतया ब्रह्मावगतेः पूर्वमेव सद्भावात् वेदान्तेन प्राप्स्यमाणावगत्यन्तराभावान्नैतद्युक्तम्। शुद्धब्रह्मावगतिर्नास्तीति चेन्न वेदान्तादपि त्वद्विवक्षितशुद्धब्रह्मावगतेरनुत्पादात्। सर्वाभावोपलक्षितब्रह्मावगतिः सा वेदान्ताज्जायत इति चेत् तर्हि स्वप्रकाशतया सिद्धे धर्मिण्यतात्पर्यवतां वेदान्तानां सर्वाभावरूपोपलक्षणधर्मे तात्पर्यमिति वक्तव्यम्। तस्य च धर्मस्य ब्रह्मस्वरूपत्वे सिद्धत्वप्राप्त्या ब्रह्मभिन्नसत्यत्वपक्षेऽपसिद्धान्तापत्या ब्रह्मभिन्नातत्वपक्षमेवाङ्गीकार्यमिति अतत्वावेदकत्वं वेदान्तानामप्यङ्गीकृतं स्यात्। पूर्वापेक्षया ब्रह्मावगतौ विशेषाभावे उपलक्षणधर्मबोधोऽप्ययुक्तः।

किञ्च वेदान्ता अपि स्वस्वरूपातिरिक्तसर्वाभावोपलक्षितब्रह्मावगतिं जनयन्ति उत स्वघटितसर्वाभावोपलक्षितब्रह्मावगतिम्। नाद्यः। वेदान्ताभावासिद्ध्याऽद्वैतहानेः। न द्वितीयः। स्वस्वरूपाभावेऽबोधकत्वप्रसङ्गः। तस्माद्वेदान्तैः सर्वाभावोपलक्षितब्रह्मावगतिस्तु खपुष्पायितैवेति न समन्वयसूत्रार्थः परोक्तो युक्तः।

किञ्चोपासनाङ्गत्वे च ब्रह्मणोऽनित्यता स्यादिति यदाशङ्कितं "तत्तुच्छम्" अनित्यतायां विध्याङ्गत्वस्याऽ(कर्माङ्गत्वस्य) तन्त्रत्वात्। कर्माङ्गस्य देवतादेरनित्यतायां प्रमाणसिद्धतदुत्पत्तिकारणकत्वं तन्त्रम्। क्रियाङ्गत्वं तु पदार्थस्य क्रियोत्पत्तेः पूर्वसत्वे तन्त्रम्। पूर्वसत्वं तु नित्यस्यानित्यस्य च स्यान्नाम। नित्यस्यापि देवताप्रवाहस्य वेदस्य चोपासनाध्ययनविध्यङ्गत्वमिव नित्यस्यापि ब्रह्मण उपासनाङ्गत्वे न कापि हानिरिति पूर्वपक्षः त्वद्रीत्या अनुद्धार्य एव। निर्भेदमुक्त्यभावादेव तादृशमुक्त्यर्थं उपनिषदां साक्षाद् ब्रह्मस्वरूपबोधकत्वोक्तिरप्ययुक्ता। उक्तरीत्या पराहतत्वात्॥

किञ्च किञ्चिच्छब्दवाच्ये वस्तुन्येव शब्दान्तरलक्षणावृत्तेर्दर्शनात् त्वद्रीत्या

सर्वशब्दावाच्यस्य ब्रह्मणो लक्षणावृत्तेरप्ययोगात् सर्वथा वेदान्तावेद्यत्वं ब्रह्मणोऽङ्गीकृतं स्यादिति वेदान्तानां षड्विधतात्पर्यनिर्णायकलिङ्गप्रदर्शनमप्ययुक्तम् । वेद्यत्वरूपसामान्यधर्मवति हि पदार्थे शब्दतात्पर्यनिर्णायकलिङ्गान्वेषणं सार्थकं दृष्टम् । त्वन्मते तदयोग इत्युपपादितम् ।

प्रदर्शितानां षण्णां लिङ्गानां चाद्वैते तात्पर्यनिर्णायकत्वविघटनं श्रीन्यायसुधान्यायामृतादौ सम्यक्प्रदर्शितम् । तस्मात् ''तत् तु कर्मशेषत्वाभावा-दात्मैव (चित्स्वरूपं) सम्यक् सम्बन्धवत्वात् साक्षाच्छ्रुतिमूर्धन्यवेद्यमिति'' सिद्धान्तोऽप्ययुक्तः ॥

किञ्च तत् = ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादवगम्यत इति हि शाङ्करभाष्यम् । भाष्योक्तं ब्रह्मशब्दार्थं परित्यज्य चित्स्वरूपमित्यनुवादेन स्वभाष्यविरोधोऽपि स्वानुवादस्य सम्पादितः ।

वस्तुतस्तु प्रथमसूत्रोक्तस्य गुणपूर्णत्वरूपस्य विष्णुलक्षणस्य तत्सम्भावकस्य द्वितीयसूत्रोक्तजगत्सृष्ट्यादिकर्तृत्वलक्षणस्य च ऋगादिसर्वशास्त्रप्रमाणकस्य रुद्रादावतिव्याप्तिपरिहारकं समन्वयसूत्रमिति रहस्यं माध्वपादानुपजीविनः सायणमाधवस्य तद्गुरोश्च कथं बुद्ध्यारूढं स्यादिति मन्तव्यम् ॥

तदेवं मूढमाधवकृतैतादृशाप्रामाणिमकाननुगुणार्थानुवादश्रवणेनानन्दबाष्प-भरितो भारतीतीर्थगुरुश्च मूढतम इत्यहो मूढतमगुरोः सकाशान्मूढतरशिष्यस्य मौढ्यमयसन्यास - वाक्यचतुष्टयपरिग्रहणादिरूपोऽयं महामौढ्यमहोत्सवः ॥

यदुक्तं मा. मञ्जर्यां ''लब्धाश्रमो विद्यारण्यो मूर्तीभवन् मुक्तिरिव........ विरराजेत्यादि'' तत्सर्वमयुक्तम् । शृङ्गिभट्टाख्यभूतप्रतिष्ठापन - बुक्कहरिहराख्य-शैवसमाश्रयणराज्यनिर्माणप्रभृतिलौकिकव्यापृतिविरुद्धत्वात् । मेषपालं पुरुषं बलिं विधाय देवीवशीकरणं सुवर्णवृष्टिवर्षणं, राज्यनिर्माणादि यतिधर्मविरुद्धमिति तथाऽसुरीप्रवृत्तिश्चेति तद्वान् विद्यारण्यो महानसुर इति ज्ञायते ।

शा. शके १२५८ तमे धातुनामसंवत्सरे विजयनगरनिर्माणोक्त्या ततोऽपि पूर्वं सन्यासं स्वीकृत्य विद्यामानस्य विद्यारण्यस्य १३०८ तमे शा. शकीये क्षयसंवत्सरे निर्याणवर्णनेन पञ्चाशत्संवत्सरेभ्योऽधिककालसम्बन्धिनी सन्यासाश्रमिता सिद्धेति तदीयान्तिमकाले एव क्रमसन्यासस्वीकार इति पूर्वं कथितं पूर्वोत्तरविरुद्धम्।

पूर्वोक्तरीत्या व्याससिद्धान्तानभिज्ञस्यान्यथाज्ञानिनो विद्यारण्यस्य व्यास-दर्शन - तत्प्रसादावास्यादिकं सर्वथा शास्त्रविरुद्धमिति "शृङ्गिभट्टाख्यपिशाच-समाश्रयणपूर्वकं बदरीगमनं व्याससन्दर्शनं, व्यासप्रसादात्सुमूर्तावधारणमित्यादिकं" यदुपवर्णितं तत्सर्वमप्रामाणिकम्। तन्महत्वप्रदर्शनाय कल्पितमिति सर्ववेद्यम्।

वेदार्थनिर्णायकब्रह्मसूत्राणां श्रीविष्णुसर्वोत्तमत्वादौ न्यायसंसूचकत्वं पूर्वमुपपादितमिति तद्विरुद्धं सूत्रानवलम्बि च स्वकपोलकल्पितार्थवर्णनपरं विद्यारण्यकृतं चतुर्वेदभाष्यं च कथं भाष्यं स्यात्। भाष्यत्वव्याघातात्। सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुकारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥ इति हि प्रमाणम्। अपि च श्रीमध्वाचार्यैर्ब्रह्मसूत्रमनुसृत्य श्रुत्यर्थसंवर्णन क्रमः ऋग्भाष्यादौ प्रदर्शितः। तमनादृत्य वेदार्थं स्वेच्छया वर्णयतो विद्यारण्यस्य सूत्रकारं परित्यक्तवतः कथं व्याससन्दर्शनं स्यात्? कथंतरां तत्प्रसादः? कथंतमां च तदीयभाष्यसंशुद्धिः ?। तस्माद् वेदभाष्यमहत्ववर्णनं सर्वमप्रामाणिकम्।

किञ्च काशीस्थगङ्गालये विद्यमानस्य व्यासस्य परिज्ञप्त्यै स्वसामर्थ्याभावात् पिशाचानुग्रहावलम्बिनो विद्यारण्यस्य तत्रत्यपुरुषविशेषे व्यासत्वपरिज्ञप्तिश्च प्रत्यग्दृष्ट्या(ज्ञानदृष्ट्या) सञ्जतेति वर्णनं च हास्यास्पदम्।

तद्ग्रन्थानां परिशुद्धये व्यासोपदिष्टं अलर्क(श्वान)लेहनं मद्यभाण्डे निमज्जनं च विधायाऽपि तद्रहस्यावलोकने पृथग्दृष्टिरहितस्य विद्यारण्यस्य पम्पातटं समागत्य ब्रह्मराक्षसमुखेनालर्कमद्ययोः वेदपुरुषत्वपीयूषत्वपरिज्ञानं प्राप्तमित्यादिकं यन्मा.

मञ्जर्युक्तं तत्सर्वं तद्ग्रन्थमहत्वबुद्ध्यै कल्पितकथाविलेपनमिति को नाम विवेकी न जानीयात् ।

वस्तुतस्तु विद्यारण्यकृतवेदभाष्याणि श्रुतिसूत्राद्यननुगुणानि तद्विरुद्धार्थपराणि च श्वानावलेहनमद्यभाण्डनिमज्जनयोग्यान्येवेत्याशयः । एतादृशव्याख्यासंस्पर्शनेन वेदपुरुषस्य मालिन्यमेव सञ्जातम् । तन्मालिन्यपरिमार्जनपूर्वकं वेपुरुषाभ्यर्चनायैव श्रीमद्राघवेन्द्रतीर्थ श्रीमच्चरणैः मन्त्रालयस्वामिपादैः वेदविवृत्तिरूपव्याख्यानाभिषेकः श्रीमध्वाचार्यप्रदर्शितक्रमेण श्रुतिसूत्राद्यनुगुणो विरचितः । तेन वेदपुरुषः श्रीमन्नाराणयो नितरां विरराज । तदुक्तं गुरुगुणस्तवने 'श्रीवादीन्द्रतीर्थश्रीचरणैः :-

हृद्याटीकानवद्या परविवृतयजुःसामसम्बन्धिनी ते
मालिन्यक्षालनाम्भः स्वयमजनि हरेरुत्तराङ्गे च मूर्ध्नि ॥
सैवर्चां राघवेन्द्र! व्रतिसमितिमणेऽनन्यसम्पर्कभाजा
मोजिष्ठे दक्षिणाङ्गे मृगमदमिलितोदारपाटीरसारः ॥

इति । परविवृत = विद्यारण्यादिविवृतेत्यर्थः ।

भारतीतीर्थनिर्याणानन्तरं चन्द्रशेखरभारतीनामानं सन्यासिनं विधाय तस्मै विद्यारण्यकृतचन्द्रमौळीश्वरलिङ्गप्रदानादिवर्णनमेतत्स्मारयति यत् तल्लिङ्गं शङ्कराचार्येण रेणुकाचार्यपादावलम्बनेन समवाप्तम् । रेणुकाचार्यश्च शैवगुरुः शङ्कराचार्यकालीनः प्रभावी महामायावी । तत्प्रीतिसम्पादनेन शैवजनानुरागसम्पादनक्रमः शङ्कराचार्यानुष्ठितः । अत एवा''न्तः शाक्तो बहिः शैवः सभामध्ये तु वैष्णव'' इति शङ्कराचार्यप्रसिद्धिः । एवञ्च नैषा साङ्करीयपरम्परा परिशुद्धा । किन्तु तत्तत्कालीनानां बक्कस्वामिरेणुकाचार्यप्रभृतिकापुरुषाणां पादोपजीवनेन कथंकथमपि स्वप्रतिष्ठां समासाद्य जगति प्रसिद्धा ॥

''........तापससार्वभौम'' इत्युक्त्वा ''स्वीकृत्य सिंहासनं'' राज्याधि-

कृतिं वितेने'' इत्येतद्वर्णनं च विद्यारण्यस्य यतिधर्मभ्रष्टतास्फोरकमिति व्याहतम् ॥ न ह्यापत्कालं विना यतिधर्मिणो राज्याधिकारस्वीकारः शास्त्रविहितः । अत एव कृष्णदेवरायस्य वैष्णवमहाराजस्य विजयनगरसाम्राज्याधिपतेः सम्प्राप्तायां तन्मरणापादकायां कुहुयोगाख्यमहापद्येव श्रीव्यासराजगुरुसार्वभौमैर्भगवदिच्छया तदापत्परिहरणपूर्वकं मुहूर्तत्रयमात्रं राज्याधिकारः स्वीकृतः संरक्षितं च राज्यराजादिकम् । एते खलु तापससार्वभौमाः । एवञ्चानापद्यपि राज्याधिकार-स्वीकारः स्वान्तस्थाशापिशाचाद्याविष्कारात्मक एवेति न यतिः सः । स्वशिक्षिते समर्थे बुक्कराजे विराजमाने सति निष्कारणं स्वयं राज्याधिकारं स्वीकृतवतो विद्यारण्यस्य कथं तापससार्वभौमत्वम् ? तापसत्वाख्यसामान्यधर्मस्यैवाभावात् । तस्मादयं तामससार्वभौम एव ॥

शा. शकीय १३०८ तमे क्षयवर्षे विद्यारण्यस्य गुहाप्रवेशोक्तिरपि त्वदुक्तरीत्या श. शके ११५० तमीयतदुत्पत्तिकालमारभ्य १३०८ तमवर्षपर्यन्तं सम्भूय १५८ वर्षात्मको विद्यारण्यजीवितकालः सम्भवतीति मानुषायुर्मान-विरुद्धत्वादुपेक्ष्या ।

एवं वेदशास्त्रादीनामपार्थकरणेन वेदानां वेदव्यासस्य च विद्रोहं कृतवतो विद्यारण्यस्य शङ्कराचार्यावतारत्वं पुनर्वर्णयता मा. मञ्जरीकारेण अन्त्यकाले तदीयगुहाप्रवेशोऽपि तन्मूलाचार्यशङ्कर गुहाप्रवेश इव दुरन्तमय इति संस्मारितो भवति ॥

विद्यारण्यस्य दुश्चर्यां श्रुण्वन् यो व्याजतोऽपि वा ।
भुक्त्वेह दुःखमत्यन्तमन्ते यास्यति दुर्गतिम् ॥

भो सज्जनाः ! मा श्रुणुत विद्यारण्यकथामिमाम् ।
माणिक्यमञ्जरीकारकल्पितां कुलनाशिनीम् ॥

विद्यारण्यक्षोभकरं माध्वोल्लासकरं शुभम् ।
श्रीमदक्षोभ्यचरितं मोक्षदं श्रुणुताऽदरात् ॥

जयत्यक्षोभ्यतीर्थार्यनृहरिर्माध्ववल्लभः ।
विददार नयाग्रैर्यो विद्यारण्यं हिरण्यकम् ॥

तदेवं मणिमञ्जर्याद्यपद्ये परमिति विशेषणेन ''तत्त्वमसि'' वाक्यार्थसारभूतं द्वैततत्वं संप्रदर्शितम् । श्रीहरिगतपरत्वं नाम चेतनाचेतनात्मकसकलजगत्प्रतियोगिक पारमार्थिकभेदवत्वम् । तत्र युक्तिसूचकं अक्षरमिति विशेषणम् । क्षरोनाम नाशः । स चतुर्विधः । तथोक्तम् :- ''अनित्यत्वं देहहानिः दुःखप्राप्तिः अपूर्णता । नाशः चतुर्विधः प्रोक्तः तदभावो यतो हरेः ''इति । चतुर्विधनाशान्यतमवता प्रपञ्चेन तद्रहितस्य गोविन्दस्य पारमार्थिकोऽत्यंतभेदः सुज्ञानः ।

अपि च - अक्षः = चक्रं सुदर्शनं ॥ अक्षो ........ चक्रे कर्षे पुमान् ''इति हि कोषः ।

सः एषामस्तीति अक्षाः । ''अर्शआदिभ्यो अजिति'' सम्बन्धार्थाच्प्रत्ययांतः शब्दः । संबन्धश्च धारकत्वम् । तच्च गोपीमृदा तापनेन वा प्रमाणानुसारेण ग्राह्यम् । तथा च चक्रधरिणः । उपलक्षणया शंखादिकं च ग्राह्यम् । चक्रधारणं च बालस्त्रीवृद्धादिसर्वाधिकारिकमिति कण्ठतश्चक्रमुक्तम् । एवं च अक्षान् - यथायोग्यं तप्तातप्तचक्रशंखदिवैष्णवचिह्नधारिणः भक्तान् रमयतीति अक्षरः ॥ तप्तचक्रादि-मुद्रोर्ध्वपुण्ड्रधारिमाध्वानन्दप्रदाता । अथवा - अक्ष - उक्तरीत्या चक्रादिकं । रे - करे - येषान्ते अक्षराः । ''रःपुमान् पावके कामे क्षये वज्रे करे क्रतौ'' इति नानार्थरत्नमाला । धृतोर्ध्वपुण्ड्रचक्रादिमुद्राङ्कितबाहवः । ते अस्य संतीति अक्षरः । वैष्णवभक्तजनसंबन्धी हरिः । संबन्धश्चानुग्राहकत्वम् । अनेन सद्वैष्णव सदाचारादिकमुपपादितम् । अर्थात् शैवाद्याचारपरिवर्जनमप्युक्तं भवति ।

तथा च गोविन्दे आनन्दज्ञानदेहमिति विशेषणेन विष्णोस्सर्वोत्तमत्वस्य,

सर्ववेदप्रतिपाद्यत्वस्य, श्रियःपतिमित्यनेन - रुद्रादीनामवरत्वस्य श्रीमदानन्दतीर्थार्य-वल्लभमित्यनेन - श्रीमध्वाचार्याणां मुख्यप्राणावतारत्वस्य, परमित्यनेन द्वैततत्वस्य अक्षरमित्यनेन - वैष्णवधर्मस्य चोपपादितत्वात् - स्वाद्यपद्येन पूर्वमेव ''माणिक्य-मञ्जरीं'' स्वविरुद्धार्थपरां अध्यायचतुष्टयात्मिकां सर्वशः विदारयन्ती श्रीमणिमञ्जरी श्रीविष्णुसर्वोत्कर्ष वायुजीवोत्कर्षादिज्ञानमुत्पायन्ती धिक्कुर्वन्तीचाद्वैतादिमतं नित्यं राराजते।

नचाद्वैतमेव पारमार्थिकम्। द्वैतग्राहि निर्बाधप्रत्यक्षादिप्रमाणविरोधात्। न च तत्वमस्यादिश्रुतीनामानर्थक्यमितिवाच्यम्। द्वैतश्रुत्याद्यविरोधाय भगवत्सादृश्यादि-रूपमोक्षपरत्वस्य पूर्वमुक्तत्वात्। न चाद्वैतश्रुतीनामपूर्वार्थत्वेन प्राबल्यमिति वाच्यंम्। द्वैतग्राहिनिर्बाधप्रबलसाक्षिप्रत्यक्ष श्रुतियुक्ति विरोधेना-द्वैतेऽपूर्वताया अयोगात्। प्रबलमानान्तराविरुद्धत्व समानाधिकरणमानान्तरासिद्धत्वं हि अपूर्वत्वम्। न तु मानान्तरासिद्धत्वमात्रम्। तथात्वे - शून्यबोधकवाक्यस्याप्यपूर्वार्थपरत्वेन प्राबल्य-प्रसंङ्गात्। न च प्रत्यक्षादिसिद्ध भेदबोधकानांद्वैतश्रुतीनां अविदितार्थवेदकत्वरूप-श्रुतिधर्मायानुवादकत्वमेववाच्यमिति वाच्यम्। परमात्मगतस्य जीवादिप्रति-योगिकभेदस्य, तथा अतीन्द्रियाननुमेय पुण्यपापादेर्जगतः प्रत्यक्षासिद्धत्वात् तद्बोधकश्रुतीनां अविदितार्थवेदकत्वरूप श्रुतिधर्मोपपत्तेरनुवादकत्वायोगात्। अत एवाद्वैतश्रुतीनामेव प्रबलप्रत्यक्षद्वैतश्रुति विरोधेनाप्रामाण्यापत्तेः प्रबल प्रमाणा-विरुद्धार्थपरत्वस्य ''यजमानः प्रस्तरः'' इत्यादिवेदवाक्यानामिव स्वीकार्यत्व-मभिहितमाकरे।

''अग्निर्हिमस्य भेषज''मित्यादीनां श्रुतीनां अग्निनामकभगवत्परत्वेनापूर्व-ताया अभंगात्। एवं वेदमात्रवेदितव्यधर्माधर्मदेवतादिपदार्थानां स्वेनैवं मिथ्यात्वप्रतिपादकत्वे अद्वैतश्रुतीनामुन्मत्तप्रलापायितत्वशंका कथं न घटेतेति यावदायुष्यं परिशीलय।

द्वैतश्रुतिमात्रसिद्धधर्मकर्मादेरपककषायत्वे अद्वैतश्रुतिमात्रसिद्धाद्वैतस्यापक-कषायत्वं कुतो न स्यात् ? श्रुतिमात्रसिद्धत्वे समानेऽपि विना विशेषनियामकं द्वैतस्यापरमार्थत्वं, अद्वैतस्य परमार्थत्वमिति कल्पना नप्रेक्षावज्जनमनोरञ्जनाय कल्पते। अत एव - सर्वत्र द्वैतप्रपञ्चस्यौपाधिकत्वेनातात्विकत्वं, अद्वैतस्यानौपाधिकत्वेन परमसत्यत्वमिति व्यवस्था च बालजनमनोहरैव। स्वप्रकाशचिदद्वैतवादे - उपाध्यज्ञानाङ्गीकारस्य अन्योन्याश्रयानवस्थादिदूषणगणग्रस्तत्वेनानुपपन्नतायाः आकरे बहुधोपपादितत्वात्। अनुपपत्यादिदूषणविमुक्तं हि मतं प्रेक्षावज्जनमान्यं भवति । तस्मादद्वैतमतमप्रामाणिकमेव। सर्वोऽपि द्वैतप्रपञ्चः प्रत्यक्षादि-प्रमाणत्रयसिद्धः पारमार्थिकः सत्य एवेति पारमार्थिकदुःखक्लेशादिनिमग्नस्य परतंत्रस्य सज्जीवजातस्य समुद्धरणाय प्रवृत्तानां श्रुतिस्मृत्यादीनां श्रीविष्णोः सर्वोत्कर्षे एव महातात्पर्यम्।

तथा चाधिकारिभेदविवक्षया सदागमानां प्रवृत्तौ योजनाद्वयं श्रीमज्जयतीर्थ श्रीचरणप्रदर्शितं हृदयङ्गममत्रावश्यं संस्मर्तव्यम्। एकान्तभक्तविवक्षयैवं योजनाः :- ''यो हि सात्विकप्रकृतिर्लोकप्रवादात् कार्यत्वादिलिङ्गानुसन्धानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो जानन् स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेषज्ञानार्थमुत्कण्ठितमानसः तत्संस्कारवशाच्च अन्यदगणयन् वर्तते, तं प्रत्याप्तो बन्धुरिवायं वेदो तत्स्वरूपं सर्वोत्कृष्टमेव प्रतिपादयति ''परोमात्रया तन्वावृधान न ते महित्वमन्वष्णुवन्ति। न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप'' इत्यादि। ततो वाक्यार्थज्ञानादवाप्तपरमानन्दः तत्साक्षात्कारं कामयते। तं प्रति तदुपासा विधीयते। सा च प्रक्षीणान्तःकरणमलस्यैव सम्भवति। तदर्थं वैष्णवकर्मविधयः प्रवर्तन्ते। इत्येवं समस्तोऽपि वेदो नारायणसर्वोत्कर्षज्ञापन एव पर्यवसित'' इति॥

सात्विकभक्तान्तरविवक्षया च वेदवाक्यानां योजनान्तरमित्थं :- ''शरीरेन्द्रियान्तःकरणादिसन्निधानेन स्वात्मनो विविधदुःखं पश्यन् निष्कण्टकं च सुखमलभमानोऽयं संशेते किं ममेदं दुःखादिकं शरीरादिसम्बन्धनिमित्तमेवोत

स्वाभाविकमिति। तं प्रति वेदः प्रवर्तते ''तत्वमसीत्यादि'' परमात्मेव निर्दुखपरमानन्दस्वभाव एव त्वमसि। किन्तु ईश्वराधीनाविद्याद्युपस्थितशरीरादिनिमित्तेनान्यथारूपेणोपेत इति। ततः पुनरसौ जिज्ञासते। केनौपायेनाहमिदमस्वाभाविकं पारमार्थिकमेव रूपं हित्वा स्वरूपेणावस्थितः स्यामिति। तं प्रति नारायण एव प्रसन्नस्तदुपाय इति सर्वोत्तमं तत्स्वरूपं निरूप्यते। ततः कथमसौ प्रसीदतीत्यपेक्षायां तत्साक्षात्कारः तदर्थं श्रवणादिकं तदङ्गतया कर्माणि च विधीयन्ते। यथा

''यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण।
नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिःकर्मपाशादमुष्मात्''

इति। इत्येवं समस्तस्यापि वेदस्य नारायणसर्वोत्तमत्वज्ञापन एव पर्यवसानमिति'' ॥

सतीष्वनेकासु वादविप्रतिपत्तीषु न सदागमैस्तत्वज्ञानोत्पत्तिरिति तदपनोदनाय वेदेतिकर्तव्यतारूपं श्रीब्रह्ममीमांसाशास्त्रं श्रीमन्नारायणो बादरायणोऽसूत्रयत्। एतस्य शास्त्रस्य सूत्रकारसम्मतं भावं तदन्तेवासिवरेण्याः श्रीमुख्यप्राणावताराः श्रीमन्मध्वाचार्या स्वप्रणीतेषु श्रीमद्भाष्यादिषु समाविष्कुर्वन्।

एतेषां श्रीहरिवायुगुरूणां महिमातिशयप्रतिपादनपरा मणिमञ्जरी श्रीमन्नारायणपण्डिताचार्यविरचिता तन्माहात्म्यज्ञानोत्पादनपूर्वकं श्रीमाधवमध्वपदाब्जयोः भक्तिविशेषं समुत्पादयन्ती नित्यं सुजनसंसेव्या अबाध्या अखण्ड्या च निष्कण्टकं रराजत इति सर्वमनाकुलम् ॥

**जयतात् श्रीरमानाथो जीयान्मध्वः सतां गुरुः।**
**नारायणार्यो जयताज्जीयाच्छ्रीमणिमञ्जरी ॥**

**जयतान्मध्वसिद्धान्तो जयतान्मध्वसत्कथा।**
**जयतान्माध्वसन्मार्गो जयतान्माध्वसत्सभा ॥**

**आचार्याणां वराणां मयिपरमकृपाकारिणां मद्गुरूणां**
**ध्यानार्यप्रीतिभाजां विविधकृतिकृतां कण्टकोद्धारनाम्नाम्।**

सम्प्रीत्यै तत्कृपातो हरिगुणमणिसन्मञ्जरीवैभवाख्या
माध्वानन्दप्रदात्री कृतिरिह विहिता दुष्टमाणिक्यभेत्री ॥

गुरुवैभवकर्तॄणां मद्गुरूणामनुग्रहः ।
मञ्जरीवैभवस्यापि कर्ता मे लेखनी मतिः ॥

श्रीमद्वासिष्ठगोत्रे धृतजनिरमलास्वृक्षु शाकल्यशाखः ।
कावेरी सुब्बणार्याभिधसुकृतलसद्दम्पतीलब्धजन्मा ॥
पूज्यश्रीजालिहाळाभिधविबुधमणेः प्राप्तवैदुष्यभाग्यः ।
बाळ्गारुश्रीनिवासः व्यतनुत मणिसन्मञ्जरीवैभवं हि ॥

दुष्टनिन्दनसच्छिष्टप्रशंसनसुकर्मणा ।
शिष्टेष्टमध्वहृत्प्रेष्ठः श्रियाश्लिष्टः प्रीयतां हरिः ॥

एतत्सत्कर्म संप्राप्तपुण्यं मद्गुरुदैवते ।
वैनीनाम्नि महत्यर्थे प्रत्यक्षे स्वर्पितं मया ॥

श्रीमन्मध्वाचार्यमूलमहासंस्थानश्रीमदुत्तरादिमठाधीश्वरश्री १००८
श्री श्री प्रातःस्मरणीयश्रीमत्सत्यध्यानतीर्थ श्रीमच्चरणान्तेवासि
परमपूज्य पण्डितराज श्रीमज्जालिहाळश्रीनिवासाचार्य
शिष्येण बाणाकार (बाळगारु) श्रीनिवासेन
विरचितं माणिक्यमञ्जरीभञ्जनात्मकं
श्रीमणिमञ्जरीवैभवं सम्पूर्णम्

श्रीहनुमद्भीममध्वात्मकभारतीरमणमुख्यप्राणान्तर्गत श्रीकृष्णार्पणमस्तु

---

# ಶ್ರೀತ್ರೈಲೋಕಾಚಾರ್ಯಸೇವಕ ವೃಂದದಿಂದ

## ಪ್ರಕಟಣೆಗೊಂಡ ಗ್ರಂಥಗಳು

ಪರಮಪೂಜ್ಯ ಪಂಡಿತರಾಜ ಜಾಲಿಹಾಳ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯ ವಿರಚಿತ

**ವಿಜಯೀಂದ್ರವಿಜಯ ವೈಜಯಂತೀ**

–ಭಾವೀಸಮೀರ ಶ್ರೀಮತ್ ವಾದಿರಾಜತೀರ್ಥಶ್ರೀಚರಣವಿರಚಿತ

**ಮಹಾಭಾರತತಾತ್ಪರ್ಯನಿರ್ಣಯ (ಕನ್ನಡ)**

ಪೂಜ್ಯ ಬಾಳಗಾರು ಶ್ರೀನಿವಾಸಾಚಾರ್ಯ ವಿರಚಿತ

**ಸಭಾಸಾರವೈಭವ**

ಪೂಜ್ಯ ಬಾಳಗಾರು ಶ್ರೀನಿವಾಸಾಚಾರ್ಯ ವಿರಚಿತ

**ಮಾಧ್ವಸ್ತುತಿ**

ಪೂಜ್ಯ ಬಾಳಗಾರು ಶ್ರೀನಿವಾಸಾಚಾರ್ಯ ವಿರಚಿತ

**ಮಣಿಮಂಜರೀವೈಭವ**



ಶ್ರೀಅಕ್ಷೋಭ್ಯತೀರ್ಥರು ವಿದ್ಯಾರಣ್ಯರನ್ನು
'ತತ್ವಮಸಿ' ವಾಕ್ಯಾರ್ಥದಲ್ಲಿ ಜಯಿಸಿದ ಕುರುಹು

# श्रीमध्वसिद्धान्तविजयस्तम्भः



असिना तत्वमसिना परजीवप्रभेदिना ।
विद्यारण्यं महारण्यमक्षोभ्यमुनिरच्छिनत् ।।

ಶ್ರೀಅಕ್ಷೋಭ್ಯಮುನಿಗಳು, ಪರಮಾತ್ಮ ಜೀವಾತ್ಮರಲ್ಲಿ ಭೇದ ಸಾಧಕವಾದ 'ತತ್ವಮಸಿ'
ಎಂಬ ಖಡ್ಗದಿಂದ, ವಿದ್ಯಾರಣ್ಯ ಎಂಬ ಮಹಾಯೋಧನನ್ನು ಕತ್ತರಿಸಿದರು.

-ವೇದಾಂತದೇಶಿಕರು